# चिद्गगनचान्द्रिका ॥

श्रीमहाकवि कालिदासविरचिता ।

धनदानन्दनाथदीक्षानामशालिना,
करी आग्निहोत्रशास्त्रिशर्मणा विरचितया,
दिव्यचकोरिकाख्यव्याख्यया
समलंकृता ।





अस्य मूल्यम्......
रु... ४—८—०

विज्ञप्तिः—

ये वात्राननुगम्य दोषवितातिं नन्दन्ति निन्दन्त्यमी
ये वा काव्यगुणैकलोलुपधियो निन्दन्ति नन्दन्ति ते ।
इत्थं शा (स्त्र) ब्दविवेकवेदिनिवहे दोषक्षताभावना
दासंतोषविदीपनादहरहर्मूर्ध्ना नमस्कुर्महे ॥

इति ग्रन्थकृत् ।

## पण्डिताभिप्रायाः ॥

तत्रादौ 'काव्यनाटकालङ्कारन्यायवेदान्तादिशास्त्रपण्डितानां पेरूरुसं-
स्थानास्थानसंस्थितानां मरुवाडोपनामकशम्भुशास्त्रिणाम्—

भो भोः! विदितमेवैतत्तत्र भवतां सर्वेषामेव विदुषाम् । महाकवि कालिदासकृतचिद्गगनचन्द्रिकाख्यो निखिलसाधकशिवहृदयोयोगसाङ्ख्ययोग-पथदशाभेदप्रतिपादनेन सकलदुर्मतवदावदमदविदारणपटुतरः, भक्तजनम-नोरथपूरणपारिजातः, पाठतदर्थावगतिभेदैर्यथाधिकारं परमपुमर्थप्रापकश्च, दुःखपङ्कनिमग्नजनोद्दिधीर्षाधुरन्धरः ग्रन्थराजो विजयते तराम् । इति ।

सोऽयमुदारगह्वरविषयराजसङ्कुलितशब्दार्थशरीरतया सकलजनासाधारण-दुरवगाह इति कैश्चित्सहृदयैस्सहृद्भिस्सञ्चोदिताः कमलासनवदनसदनविहा-रिभारत्यपरावतारभूताः, वेदशास्त्रश्रौतस्मार्तादिनिखिलविद्यासु विनीनविशा-लयशोधुरीणाः, सर्वतन्त्रस्वतन्त्राः, अत्रिवंशकलशोदधिकलानिधयः, 'करो-पनामकाग्निहोत्रशास्त्रिण एतद्ग्रन्थविषयान्सर्वानवलोक्य, निखिलबुध-जनमनोरञ्जनाय ग्रन्थकृत्प्रयाससाफल्याय च महता प्रयत्नेन 'दिव्यच-कोरिकाख्यां' कां चिद्विवृतिमकार्षुः । साचामूलचूडमस्माभिरवलोकिता, परिशीलिता च । अस्यास्सुप्रसिद्धसुगुसुबद्धपदमञ्जुलतया मुमुक्षुजनानां जगदेककारणपरमेश्वराभिन्नचिच्छक्त्युपासकानामत्यन्तोपयोगिनीति व्याख्या-तृपण्डितप्रकाण्डानां श्रीमतामग्निहोत्रशास्त्रिणामव्याजं, व्याख्याप्रयासं सहृ-दयास्सदयास्सुधियो विद्वांसश्च सफलयन्त्वित्यस्मदीयषष्ठ्यब्दपूर्त्युत्सवे षो-डशोत्तररूप्यशतपारितोषिकप्रदानपूर्वकं सकलपण्डितकुलकौबेर वदान्यकु-लं च सप्रश्रयमभ्यर्थयामहे ॥ इतीत्थं विबुधजनविधेयः—

'काव्यनाटकालङ्कारन्यायवेदान्तादिशास्त्रपण्डितश्च, पेरूरुसंस्थानास्था-नसंस्थितो मरुवाडोपनामकशम्भुशास्त्री शाम्भवं पदमाशास्ते ॥

महामहोपाध्यायानां कलाप्रपूर्णानां च तातासुब्बरायशास्त्रिणां,
न्यायभूषणानां पेरि लक्ष्मीनारायणशास्त्रिणां च—

## —*अभिप्रायः*—

इह खलु भारते वर्षे प्रायस्सर्वेऽपि वैदिका द्विजन्मानः पञ्चायतनदेवताः समष्ट्या व्यष्ट्या वा उपासते । समष्ट्या उपासका अपि अभीष्टां कांचन देवतां प्राधान्येन निधायोपासत इति विदितचरमेव सर्वेषामास्तिकजनानाम्।

प्रधानतया व्यष्ट्या वा तत्तद्देवतोपासनरीतयश्चागमेषु विस्तृततया प्रद-र्शिताः । श्रीमच्छङ्करभगवत्पूज्यपादास्तु शारीरकमीमांसाभाष्ये आगमाना-मप्रामाण्यमुपपादयन् तत्र दृष्ट्वा अप्रमाणभूतागममूलका स्सर्वा उपास्तय-इति मन्वाना वैदिकम्मन्याः केचन तत्तद्देवतोपासनां अवैदिकत्वेन नि-श्चित्य तत्तदुपासकान् वेदविरुद्धाचारशीलान्मन्यन्ते । एवमुपासनानाम-वैदिकत्वे तत्तत्पीठेषु श्रीचक्रं प्रतिष्ठाप्य तदाराधनप्रवर्तनरूपः श्रीभगवत्पा-दपूज्यानामाचारो विरुध्येत । तद्विरोधपरिहारायागमाप्रामाण्यप्रतिपादनं वेद-विरुद्धागमांशाप्रामाण्यतात्पर्यकम् ।

नतु वेदसम्मतांशानामप्यप्रामाण्यतात्पर्यकम् । इत्येवमवश्यमभ्युपेयमिति नि-श्चित्य वैदिकशिरोमणयो विद्वांसः वेदसम्मतागममूलकोपासनानि वैदिकत्वे-नाङ्गीकृत्य इतराण्युपासनानि श्रुत्यनधिकारिविषयकाणीति व्यवस्थाप्य सर्वा-ण्यप्युपासनानि तत्तदधिकार्यनुसारेण व्यवस्थया प्रवर्तयामासुः । तत्र श्री-विद्योपासनां श्रुतिसम्मतत्वेन प्रदर्शयितुकामः सर्वतन्त्रसारज्ञः कालिदासः चिद्गगनचन्द्रिकानामिकां काञ्चन कृतिं वैदिकलोकानुजिघृक्षया प्राचीकटत् । साच कृतिः अतिसरला गम्भीरा च परिदृश्यते विमर्शकाग्रेसराणामास्तिक-जनानाम् । गच्छता कालेन वेदरहस्यार्थपरिज्ञाने संकुचिते कालिदासी-या प्रकृता कृतिः दुरवगाहा सञ्जाता ।

एतद्ग्रन्थार्थप्रकाशकाः काश्चन व्याख्या अभूवन्निति किंवदन्तीमात्र-मस्ति । परन्तु तादृश्यो व्याख्या अधुना नोपलभ्यन्ते । एवंस्थिते तद्ग्र-न्थार्थविवरणं वैदिकोपासकानां महत उपकाराय कल्पत इत्यभिप्रेत्य गोदा-वरीमण्डलान्तर्गतकोनसीमोपमण्डलस्थित छुट्टुकुर्रुग्रामवास्तव्याः, वेदवेदाङ्ग-निष्णाताः, वैदिकोपासकाग्रेसराः, सर्वतन्त्ररहस्याभिज्ञाः, ब्रह्मश्रीयुतकर्रोप-नामकाग्निहोत्रशास्त्रिणोस्मत्सुहृदः चिद्गगनचन्द्रिकानामककालिदासप्रबन्धस्य कांचन दिव्यचकोरिकानामकव्याख्यां प्रबन्धोक्तविषयप्रतिपादकतत्तच्छ्रुत्यादि संयोजितां विरचय्य सौहार्द्रेण श्रावयामासुरस्मान् । श्रुतमात्रायां तस्यामा वयोः सर्वथा इयं प्रणाली श्रुतिसम्मता । एतद्ग्रन्थदर्शनेन श्रीविद्योपास्ते रवैदिकत्वशङ्कालेशोपि समूलमुन्मूलितो भविष्यतीति दृढविश्वासस्समजनि । श्रुतायां च व्याख्यासरणौ श्रीविद्योपास्तेः श्रुतिसामरस्यसम्पादनप्रावीण्यमे-तादृशमिदानीन्तनकाले पुरुषायुषापि दुस्सम्पादं कथं सम्पादितं प्रियसुहृ-देति कियन्तं कालमाश्चर्यमग्नान्तरङ्गौ भूत्वा, जगदस्यदेवताप्रसादः ग्रन्थकर्तुः

कालिदासस्येव व्याख्याकर्तुः प्रियसुहृदः शास्त्रिवर्यस्याप्येतादृशमपूर्वं प्रावीण्य समपादयदिति निश्चित्य विगतविस्मयौ स्वः । इतः परमपि सुहृद्वरः शास्त्रिवर्यः, एतादृशा अन्येपि विद्वांसश्च इमां सरणिमनुसृत्य- श्रीविद्योपासनायाः श्रौतत्वं स्थूणानिखननन्यायेन संद्रढय्य- वैदिकोपासकानां बहुचोपकुर्वन्तु । सर्वेपि मार्गदर्शकाय ग्रन्थकर्त्रे स्वस्वकृतज्ञतां उपहारतयार्पयन्त्विं- त्यभ्यर्थयामहे । परमकारुणिका श्रीचक्रेश्वरी श्रीललितापराभट्टारिका ग्रन्थकृतं चिरायुषा संयोज्य- स्वमहिमप्रकाशकान्तर्गतप्रमुखत्वेनाङ्गीकृत्यानुगृह्णातु इति शिवम् ॥

इति निवेदयितारौ-

'महामहोपाध्याय, कलाप्रपूर्ण' तात सुब्बरायशास्त्री,

'न्यायभूषण'

पेरि लक्ष्मीनारायणशास्त्री ।

विजयनगरम्

१७-२-४१

---

उस्मानियाविश्वविद्यालयीयसंस्कृतविभागाध्यक्षाणा-

॥माशयः॥

अयं ब्रह्मश्री अग्निहोत्रशास्त्री गुरुनामको महाशयः कालिदासीयचिद्गगनचन्द्रिकायाः संस्कृतटीकां तैलिङ्गयां लिप्यां पूर्वापरसम्बन्धप्रदर्शनपूर्वकं प्रौढ्याऽरीरचदिति तदास्यादेव कतिपयपद्यव्याख्यानं श्रावं श्रावं निरणैषम् । यद्यप्यद्वैतमतप्रतिपादयिषया कविनात्र ग्रन्थे प्रायः शब्दार्थकाठिन्यं प्रादर्शि । तथापि पण्डितेनानेन प्रतिशब्दमनेकार्थान् प्रदर्शयता पद्यभावसारल्यमापादितमिति प्रहृष्टमानसोहमस्मै प्रशंसापत्रमिदं वितरामि ।

उस्मानियाविश्वविद्यालयीयसंस्कृतविभागाध्यक्षः-

हरिहरशास्त्री ॥



## अथास्यां चिद्गगनचन्द्रिकायां
## प्रतिश्लोकं विषयसूची ।

ग्रन्थादिक्रमांकः ।

१- श्रीशक्तिपुत्रस्य गणेशस्य स्तुतिर्नादोपासकानां मायीयमलनिरासप्रार्थना ।

२- त्रिविधजीवशक्तिकारणतुरीयपरशिवस्य स्तुतिः कार्मणमलनिरासश्च ।

३- कृतितत्कर्त्रोरभेदसूचनाय तदुभयनामोद्धारः, आणवमलनिरासश्च ।

४- चिद्गगनचान्द्रकोपाप्तिफलोपन्यासमुखेन अनुबन्धचतुष्टयम् ।

५- ग्रन्थारम्भः, कृतिकर्तृदेवतास्वरूपानुप्रवेशेन विरुद्धसख्यहानिः ।

६- षडध्वपितरौ शिवशक्ती, उदितानुदितवागर्थयोर्विपामयपरावैखरीवागर्थभाववर्णनम् ।

७- साधकरुद्रस्य मन्थानभैरवरूपतावर्णनम् ।

८- कालीकालमिथुनतत्त्वम् ।

९- पारौघादिशिष्यौघान्तगुरुमण्डले पतञ्जलिमुखगुरूणां नमस्कारः ।

१०- पञ्चवाहबीजरूपा शक्तितनुः ।

११- वक्ष्यमाणपञ्चशक्तिसमष्टिरम्बिकाव्योमवामेश्वर्यपरपर्याया ।

१२- कैलासस्वरूपनिरुक्तिपूर्वकं शाक्तशाम्भवानुत्तरविसर्गमयपराहंवागर्थमन्त्रयोरुद्धारः ।

१३- निरावरणचित्स्वरूपवर्णनम् ।

१४- अजहदद्वयोदयसच्चिदानन्दवागर्थस्वरूपवर्णनम् ।

१५- अध्यारोपापवादाभ्यां स्वरूपबोधनाय परावाग्देवतायाः सृष्ट्यादिकृत्यहेतुतावर्णनम् ।

१६- गुणत्रयसूक्ष्मसृष्टिः ।

१७- भूतत्रयस्यैव गुणत्रयस्थूलरूपता ।

१८- वागर्थषडध्वप्रकृतेरेव षड्गुणपरमैश्वर्यरूपता ।

१९- वैदिकज्ञानकर्मणोस्सत्त्वतमोमयदेवतास्थूलरूपता ।

२०- वैदिकयोगसांख्ययोः फलैक्यप्रदर्शनम् ।

२१- पूर्णिमाऽमावास्ययोः सृष्टिसंहारहेतुप्रतीकरूपता ।

२२- नवसप्तपाककालमानश्रीचक्रे व्यावहारिकपितृमानगणनाप्रकारेण विद्याविद्यापूर्णिमामावास्ययोः परस्परभक्ष्यभक्षकभावेनाद्यतनकालभक्षकतावर्णनम्, प्रथमविमर्शसूत्रार्थः इति ॥

## अथ द्वितीयविमर्शारम्भः

२३- प्रमात्रहमक्षे व्यावहारिकप्रमातुरपि तात्कालिकत्रिपुटीविकल्पधियः काली निर्मिततया कालीमूलरूपमकलङ्कितमिति वेदितुर्विमर्शकस्यत्रा सर्वस्यापि नित्यमुक्तत्वेनानुपायस्थितिवर्णनम् ।
२४- विद्याऽविद्यामध्यकेन्द्रस्थकुलधर्मपीठस्यात्मनो विमर्शनप्रकारः ।
२५- आत्मन्याणवजीवत्वमलनिराकृतिप्रार्थनम् ।
२६- त्रिविधकर्मविलापनम् ।
२७- त्रिविधकर्मनाशात्स्वस्वरूपलाभः ।
२८- असङ्गितालाभश्च ।
२९- स्वस्वरूपज्ञानलाभोत्तरं द्वैतवृत्तीनां प्रत्यभिज्ञातात्मावाप्तिसहायता ।
३०- स्वस्वरूपमय्यापि वाचा स्वस्या प्रतिपाद्यतायां त्रिविधभावभासिताया वाच अप्रतिपाद्यत्वे कैमुतिकन्यायावतारः ।
३१- विमर्शमय्या वाचः भूरादिव्याहृतिरूपेण संहृत्यादिधामसु जाग्रदादिसप्त-भ्योप्यधोव्याहृतत्वेन स्वस्वरूपादधःस्थितिः ।
३२- सूर्यचन्द्रनेत्रद्वयमध्यकेन्द्रस्थितधामत्रयसमष्टिवह्निमूर्तिमयपरमशिवदर्शन-प्रार्थनम् ।
३३- वैखरीप्रभृतिकवागर्थत्रिपुटीद्वयस्य अपराप्रकृतिरूपतया भेदाश्रयत्वम् ।
३४- विराड्विश्वमूर्तिमयशैवशाक्तचतुःपञ्चकोणसंसृष्टविश्वमयश्रीचक्रे शिवश-क्त्योराश्रयाश्रियभावः ।
३५- परावागर्थसृष्टिसमुद्रे अर्थपञ्चकस्य तरङ्गरूपता ।
३६- अन्तर्बहिस्साधारण्येन कालपुरुषतत्त्वयोर्द्वादशक्रमवर्णनम् । [नं च ।
३७- धामत्रये वर्णोत्पत्तिप्रकारः लक्षणया देशकालयोः कृत्स्नक्रमे मानभेदवर्ण-
३८- प्राणस्पन्दात्मकानाहतध्वनिरूपेण प्रणवस्य वाच्यवाचकाभेदसमर्थनम् ।
३९- व्यक्ताऽव्यक्तशब्दभेदेनाहतानाहतत्रिचतुःपञ्चवाहजीवशक्तिभेदेन वागर्थयो र्भेदाभेदवर्णनम् ।
४०- मातृकार्णेषु स्वरेषु च धामत्रयकलारूपता सर्वस्वरवर्णानां सोमकलारू-पता च ।
४१- बीजयोनिविधिभेदितायास्सकलमातृकाया अपि पारमेश्वरक्रियाशक्तिरूपता
४२- नादस्य बिन्द्वक्षररूपभेदेन ज्ञानक्रियानियामकतया त्रिपुटीसूक्ष्मरूपता ।

४३- क्रियासम्बन्धात्प्रागेव चिदात्मनः स्पन्दाविर्भावाद्धेतोः प्रथमस्पन्दे उद्यमरूपता द्वितीयादिषूर्मिरूपता चेति वर्णनम्।
४४- खेचर्यादिशक्तिपञ्चकाभिन्नतरङ्गाविर्भावः।
४५- शक्तिशिवयोः कुलाकुलधर्मधर्म्युपयोगितया सांशनिरंशबहिरन्तश्शरीरशरीरिरूपतावर्णनम्।
४६- शक्तिशिवयोः कुलाकुलधर्मधर्मभावसामरस्यविश्रान्तिवर्णनम्।
४७- धर्मधर्मिभेदविवक्षाकृतगुणागुणीभाववर्णनम्। (ण्डले अग्रगण्यतावर्णनम्।
४८- भूतपञ्चके पञ्चब्रह्मशक्त्यभेदेनोन्मनीनादाकृतिस्वरूपसंस्मर्तुरपि सिद्धम-
४९- वस्तुनि वास्तवस्वरूपभेदनिराकरणम्।
५०- वासनात्मनापि चित्तस्य शरीरनिरसनपूर्वकं परौघादिशिष्यौघान्तगुरुमण्डले पञ्चध्वरूपतावर्णनम्।
५१- वासनात्मषट्छक्तिमयषडङ्गकशरीरकजगद्भूतोदरीत्वप्रदर्शनम्।
५२- तेनैव योगेनाऽव्याहतजगन्मातृताकालीकालमिथुनस्य भासाचक्ररूपता च।
५३- उक्तलक्षणजगन्मातृस्वरूपोपास्तिविमर्शनादेः परमावधिप्रदर्शनम्।
५४- जडजगदपोहनेन चिन्मयजगत्स्फुरणप्रकारवर्णनम्।
५५- जगद्भेदस्य नैसर्गिकस्फुरणं पुरुषापचारो न वस्तुस्वभाव इति प्रदर्शनम्।
५६- जगज्जीवपरात्मनां तादात्म्यभेदादिस्फुरणे रामानुजीयपूर्णप्रज्ञादिवैदिकाभासमतान्तरेषु आगममर्यादयापि श्रुतितात्पर्याननुगतिप्रदर्शनं आगमौपनिषत्परिभाषासामरस्यस्य व्याख्याभेदेन निरूपणञ्च।
५७- माध्यमिकादिबौद्धमतखण्डनं पूर्ववदागमौपनिषत्परिभाषाभेदेन तदीयव्याख्याभेदनिरूपणपूर्वकं स्वरूपनिरूपणं च।
५८- अनाश्रितशिवतत्त्वे जगन्निमज्जनप्रकारविवरणम्।
५९- चित्तप्रलयलक्षणशाम्भवविसर्गाकारेण चित्तप्रबोधलक्षणशाक्तविसर्गाकारेण वा त्रिपुटीचतुःपञ्चवाहमहार्थनिकरस्य भानमात्रशरीरतावर्णनम्।
६०- साक्षित्वसंसारित्वयोः प्रकारभेदेन स्वाराज्यापरपर्यायं धामत्रये प्रकाशचक्रस्वरूपसूचनम्।
६१- विश्वमयविश्वोत्तीर्णधामत्रयप्रकाशचक्रएवांशांशिभावनिरूपणम्।
६२- पुरुषोत्तमतत्त्वमयानन्दचक्रस्वरूपनिरूपणम्।
६३- पाशुकभेदवासनानिमित्तकं पुर्यष्टकत्रैविध्यवर्णनं पाशुपताद्यागमपरिभाषासामरस्यं च।

६४- भक्ष्यभक्षकभावापन्नपशुपशुपतिजीवेशयोर्मध्यकेन्द्रस्थित साधकाहंमन्त्रमयवागर्थषडध्वस्वरूपवर्णनम् ।

६५- अहंमन्त्रमयवागर्थषडध्वरूपस्यात्मनो राजसंज्ञया असौमन्त्रमयमनोबुद्धियुतज्ञानकर्मेन्द्रियषट्कयोः साङ्ख्ययोगपथद्वयप्रवर्तकज्ञानकर्मषडाननशिवकुमारात्मकराजपुत्रसंज्ञया च, वेदादिभाषावाङ्मयपर्यन्तवैखरीविद्याप्रपञ्चस्य वैदिकचातुर्वर्ण्याधिकारिकप्रमेयताप्रदर्शनेन गुर्वोघषट्कवैखरीवागर्थषडध्वे त्रिचतुःपञ्चवाहतावर्णनेन च महार्थक्रमरूपतावर्णनं समाजानां समजत्वनिरूपणं च ।

६६- प्राणवृत्तीनां मण्डलत्रयाभेदेन द्वादशान्तमहाबिन्दुमूर्तिमयनादकलात्मकतावर्णनेन गुरुपुष्पसङ्कोचक्रमस्य ज्ञानार्णवोक्तस्य प्रदर्शनम् ।

६७- अधोवहननादलक्षणापानभोग्यविग्रहस्य सोममूर्तिमयानन्दचक्रस्य षोडशकलावत्त्वनिरूपणम् ।

६८- कालनेत्रीश्चन्द्रसूर्ययोर्महामूर्तिचक्ररूपिण्या महाकालसङ्कर्षिण्याः निमेषोन्मेषक्रियाप्रधाननेत्रद्वयरूपतावर्णनम् ।

६९- महाकालसङ्कर्षिण्याः पूर्वोक्तवासरेशरजनीशकलाविमिश्रमध्यकेन्द्रस्थित्या मूर्तिरूपतामूर्तयोस्तयोर्वा मध्यकेन्द्रेऽमूर्तेस्थितिरिति प्रदर्शनम् ।

७०- लीढभानुशशिमण्डलायास्तस्याः मुख्यप्राणधाम्नि पूर्वोक्तद्वादशेन्द्रियवृत्तीनां प्राणपञ्चकेन साकं दशधा सप्तधा सप्तदशधा च वा लम्भितगुरुक्रमस्थित्या प्रलयवह्निमूर्तिचक्ररूपतावर्णनम्

७१- संहृतिस्थितिविसृष्टिस्थानेषु महाकालसंकर्षिण्यास्तुर्यचित्पदप्रकाशात्सुप्त्यादिजाग्रदन्तदशाप्रसारितेष्टबोधकृतशक्तीनामेव सृष्ट्यादिकालीत्रयरूपतया सिद्धमानवशिष्यौघगुर्वोघरूपता ।

७२- सजातीयत्रिपुटीकुलस्य प्रारम्भतः प्रान्ततो वा विश्रान्तिस्थानस्यैवानाख्यापरपर्यायभद्रकाल्याः कालकाल्या वा विश्रान्तिस्थानत्ववर्णनम् ।

७३- सांख्ययोगापरपर्यायज्ञानकर्मपथयोर्गुरुसम्प्रदायभेदेनोपासनामार्गभेदनिरूपणं, चारावचरुमुद्राणां यौगिकार्थनिरूपणं च ।

७४- ज्ञानक्रियादूतीयागयोगसामरस्येन प्रमातृस्वरूपविमर्शनप्रधानद्वितीयविमर्शप्रमेयार्थोपसंहारः ।

७५- मन्त्रवीर्यशब्दितं शाक्तं गुरुशक्तिमिथुनम् । प्रक्षिप्तोयं श्लोकः ।

## शुद्धाशुद्धपत्रिका ॥

उपोद्धाते*-

| पृ सं॥ | पं॥ | अशुद्धम्- | शुद्धं |
|---|---|---|---|
| १ | १४ | कलि | कवि |
| ” | २३ | कृतिनामे | कृतिनाम |
| ३ | १२ | सिद्धस्त | सिद्धेस्तं |
| ” | १३ | ग्रन्थसदर्भे | ग्रन्थसन्दर्भे |
| ” | २१ | पप्यस्मिन्न | मप्यस्मिन्न |
| ५ | १ | रणम | रणसं |
| ९ | ४ | नीतन | नीतेन |
| ” | ११ | रूपणे | रूपेण |
| ” | १९ | सेरे | सारे |
| १० | ३ | अम्बिके | अम्बके |
| | | ग्रन्थे- | |
| ८ | २३ | प्रत्याहर | प्रत्याहार |
| ९ | १४ | स्फुन्नाथ | स्फुरन्नाथ |
| ११ | ११ | सूर्रो | सूर्यो |
| २४ | २१ | मभीष्टका | मबीष्टका |
| ४१ | ८ | सुषिप्ति | सुषुप्ति |
| ” | १६ | मयःप्राणः | मयाःप्राणा |
| ४३ | १० | कर्मणि | कर्मणी |
| ४६ | २४ | ककाम | कांधकाम |
| ७८ | २२ | प्रधाना | प्रदाना |
| ८८ | ४ | न्तभावे | न्तर्भावे |
| ९५ | ६ | वानंनो | वासनो |

| पृ-सं॥ | पं॥ | अशुद्धं- | शुद्धं |
|---|---|---|---|
| १०८ | १७ | स्मिषु | शिमषु |
| १०९ | २१ | शक्यं। यद्य | शक्यंयद्य |
| १११ | २० | तृभान | तृभासन |
| ११२ | २ | द्धत्यात्म | द्धम्यात्म |
| ११३ | ३ | व्यर्थः | तिभावः |
| ” | १४ | व्यथः। | तिभाव। |
| ११५ | २३ | अणव | आणव |
| ११८ | ५ | प्रसन्न | प्र(प)सन्न |
| ” | २१ | त्मिके | त्मके |
| १२४ | २३ | कालेय | कापेय |
| १३० | ८ | त्मनौ | त्मना |
| १३२ | १० | तोप्रकटा | तोपिप्रकटा |
| १३३ | ८ | वाश्याः। | वास्याः। |
| १३५ | २२ | वर्णासाङ्ख्ययोग | वर्णानां (साङ्ख्ययोग |
| ” | ” | सामरस्यखण्ड | सामरस्येन-खन्ड |
| १३९ | १ | णनिकेत | णानिकेत |
| ” | १८ | यन्मयाब्धि | यन्महद्धि |
| १४४ | २० | मूर्तिरस्त्र | मूर्तिरश्च |
| १४७ | १२ | तंकौशि | तंकौबेरंशि |
| १४८ | १ | नसं | नासाधनासं |



## अथ चिद्गगनचन्द्रिकायां दिव्यचकोरिकाव्याख्यायां च,
## उपोद्घाते पूर्वपीठिका ।

अयिभो:! परचरित्रविमर्शनैकप्रवणपारीणचित्तास्सचरित्रचतुराननादिम-हाबिरुदसहस्रांकिताः जम्ब्वादिद्वीपद्वीपान्तरवर्षवर्षांतखण्डखण्डान्तवासिनो-वागर्थैकविमर्शनपाण्डितीविमर्शकाग्रेसराः पण्डितप्रकाण्डाः विज्ञापयामि का-ञ्चन विज्ञप्तिं प्रत्यूषे प्रदोषैकरसिकां प्रतिपत्कलाशरीरामिव स्वीयां स्वारानु-स्वारवैसर्गिकीं नैसर्गिकीं वा नादवागर्थकलां प्रातिपदिकविमर्शेनानुशीलनी-यामनुशील्यानुजिघृक्षादृशाप्यनुगृह्णन्त्विति । विनिवेदयामि सप्रश्रयं साञ्ज-लिबन्धप्रणामसहस्रम् । स्वीयां परचरित्रविमर्शविक्षिप्तामपि दक्षिणां दृशम-सव्यामपशव्यां वा अवामतयैवात्रापि विनिवर्त्य विनिपातयन्त्विति च ।

विदितमेवैतत् कैश्चनपाश्चात्यैरतएवाप्राच्यवासितवामदर्शिभिस्तदनु-कारिभिश्च प्रकृतौ चिद्गगनचन्द्रिकाकृतौ, कर्तरि कालिदासे च कृतिप्रकृत्योः कर्तृनामरूपेष्वैक्यानैक्यपरीक्षासमीक्षाभ्यां तत्तत्स्वरूपविमर्शनपूर्वकं, कृतेरपि प्रकृतेरिव तदीयत्वातदीयत्वान्यतरकक्ष्यानिर्णयपर्यन्तम् । सोयं महाकविः कियद्वर्षदेशीयः । कति वा,नाम,कलान्विताः, कालिदासमहाकवयः। इत्यादि कुहूचन्द्रान्वेषायमाणैः, परोक्षकलिचन्द्रान्वेषमात्रपर्यवसितैः, प्रश्ना-वलिभिस्साकं नामैकदेशीयकालिवागर्थयोस्तदीययोः, स्वीययोर्वा, चिद्गगन-वागर्थयोः, कृतिप्रकृत्योर्वा यौगिकवागर्थविग्रहस्य, महार्थमर्थसम्बन्धविशेषेणा-विदुषामतएव, कति, नामकलान्विताः, महाकवय इति, गूढाभिसन्धिनेव स्वानुपक्षेनापि पृष्टासु, महाकविचन्द्रव्यक्तिषु, चरित्रेणापि यां काञ्चन व्यक्तिमजानतां साहसिकानामाधुनिकविमर्शकधौरेयाणां पण्डितप्रकाण्डानां चोद्दण्डप्राकृतब्रह्माण्डविमर्शनवाग्विवादरचनाविलासः धावंधावमथ यावन्नि-र्णयविधौ, प्राकृतेपि वा, प्राकृतां वा ताटस्थ्यकाष्ठा मधिरुह्य, हन्त न विश्राम्य तीतिमहदिदं शोकस्थानं लोकस्य। ममाप्येतच्छ्रावंश्रावं दर्शदर्श'मस्रोप्यनश्वतरो ध्रगृध्नुर्गर्दभायते' इति लोकोक्त्यनुसारेण कृतिप्रकृतिनामै रूपैक्यविषयेप्य-सञ्जातविरोधन्यायेनैवं सञ्जातस्संशयः !

तदत्र कृतिप्रकृतिकर्तृनामरूपैक्यगते विवादे विषये, कलिकातानगर-

## शुद्धाशुद्धपत्रिका ॥

उपोद्घाते*-

| पृ-सं॥ | पं॥ | अशुद्धम्- | शुद्धं | पृ-सं॥ | पं॥ | अशुद्धं- | शुद्धं |
|---|---|---|---|---|---|---|---|
| १ | १४ | कलि | कवि | १०८ | १७ | स्मिषु | शिमषु |
| ” | २३ | कृतिनामे | कृतिनाम | १०९ | २१ | शक्यं । यथ | शक्यंयथ |
| ३ | १२ | सिद्धस्त | सिद्धेस्तं | १११ | २० | तृभान | तृभासन |
| ” | १३ | ग्रन्थसदर्भे | ग्रन्थसन्दर्भे | ११२ | २ | द्भत्यात्म | द्भम्यात्म |
| ” | २१ | पप्यस्मिन्न | मप्यस्मिन्न | ११३ | ३ | व्यर्थः | तिभावः |
| ४ | १ | रणम | रणसं | ” | १४ | त्प्रथः। | तिभाव। |
| ९ | ४ | नीतन | नीतेन | ११६ | २३ | अणव | आणव |
| ” | ११ | रूपणे | रूपेण | ११८ | ९ | प्रसन्न | प्र(प)सन्न |
| ” | १६ | स्रेरे | स्मरे | ” | २१ | त्मिके | त्मके |
| १० | ३ | अम्बिके | अम्बके | १२४ | २३ | कालेय | कापेय |
| | | ग्रन्थे— | | १३० | ८ | त्मनौ | त्मना |
| ८ | २३ | प्रत्याहर | प्रत्याहार | १३२ | १० | तोप्रकटा | तोपिप्रकटा |
| ९ | १४ | स्फुरन्नाथ | स्फुरन्नाथ | १३३ | ८ | वाश्याः। | वास्याः। |
| ११ | ११ | सूर्रो | सूर्यो | १३५ | २२ | वर्णासाङ्ख्ययोग | वर्णानां-(साङ्ख्ययोग |
| २४ | २१ | मभीष्टका | मबीष्टका | | | | |
| ४१ | ८ | सुषिप्ति | सुषुप्ति | ” | ” | सामरस्यखण्ड | सामरस्येन-खन्ड |
| ” | १६ | मयःप्राणः | मयाःप्राणा | | | | |
| ४३ | १० | कर्मणि | कर्मणी | १३९ | १ | णनिकेत | णा निकेत |
| ४६ | २४ | कक्राम | कांर्धकाम | ” | १८ | यन्मयाब्धि | यन्महद्धि |
| ७८ | २२ | प्रधाना | प्रदाना | १४४ | २० | मूर्तिरख | मूर्तिरश्व |
| ८८ | ४ | न्तभावे | न्तर्भावे | १४७ | १२ | तंकौशि | तंकौबेरंशि |
| ९५ | ६ | वाननो | वासनो | १४८ | १ | नसं | नासाधनासं |



## अथ चिद्गगनचन्द्रिकायां दिव्यचकोरिकाव्याख्यायां च,
## उपोद्घाते पूर्वपीठिका ।

अयिभोः! परचरित्रविमर्शनैकप्रवणपारीणचित्ताश्चरित्रचतुराननादिमश्लाबिरुदसहस्रांकिताः जम्ब्वादिद्वीपद्वीपान्तरवर्षवर्षांतखण्डखण्डान्तवासिनो वागर्थैकविमर्शनपाण्डितीविमर्शकाग्रेसराः पण्डितप्रकाण्डाः विज्ञापयामि काञ्चन विज्ञप्तिं प्रत्यूषे प्रदोषैकरसिकां प्रतिपत्कलाशरीरामिव स्वीयां स्वारानुस्वारवैसर्गिकीं नैसार्गिकीं वा नादवागर्थकलां प्रातिपदिकविमर्शैनानुशीलनीयामनुशील्यानुजिघृक्षादृशाप्यनुगृह्णन्त्विति । विनिवेदयामि सप्रश्रयं साञ्जलिबन्धप्रणामसहस्रम् । स्वीयां परचरित्रविमर्शविक्षिप्तामपि दक्षिणां दृशमसव्यामपशव्यां वा अत्रागतयैवात्रापि विनिवर्त्य विनिपातयन्त्विति च ।

विदितमेवैतत् कैश्चनपाश्चात्यैरतएवाप्राच्यवासितवामदर्शिभिस्तदनुकारिभिश्च प्रकृतौ चिद्गगनचन्द्रिकाकृतौ, कर्तरि कालिदासे च कृतिप्रकृत्योः कर्तृनामरूपेष्वैक्यानैक्यपरीक्षासमीक्षाभ्यां तत्तत्स्वरूपविमर्शनपूर्वकं, कृतेरपि प्रकृतेरिव तदीयत्वातदीयत्वान्यतरकक्ष्यानिर्णयपर्यन्तम् । सोयं महाकविः कियद्वर्षदेशीयः । कति वा,नाम,कलान्विताः, कालिदासमहाकवयः। इत्यादि कुहूचन्द्रान्वेषायमाणैः, परोक्षकलिचन्द्रान्वेषमात्रपर्यवसितैः, प्रश्नावलिभिस्साकं नामैकदेशीयकालिवागर्थयोस्तदीययोः, स्वीययोर्वा, चिद्गगनवागर्थयोः, कृतिप्रकृत्योर्वा यौगिकवागर्थविग्रहस्य, महार्थमर्थसम्बन्धविशेषेणाविदुषामतएव, कति, नामकलान्विताः, महाकवय इति, गूढाभिसन्धिनेव स्वानुपज्ञेनापि पृष्टासु, महाकविचन्द्रव्यक्तिषु, चरित्रेणापि वां काञ्चन व्यक्तिमजानतां साहसिकानामाधुनिकविमर्शकधौरेयाणां पण्डितप्रकाण्डानां चोद्दण्डप्राकृतब्रह्माण्डविमर्शनवाग्विवादरचनाविलासः धावंधावमथ यावन्निर्णयविधौ, प्राकृतेपि वा, प्राकृतां वा ताटस्थ्यकाष्ठा मधिरुह्य, हन्त न विश्राम्यतीतिमहदिदं शोकस्थानं लोकस्य। ममाप्येतच्छ्रावंश्रावं दर्शंदर्शं 'मश्वोप्यनश्वतरो ग्रगृग्नुर्गर्दभायते' इति लोकोक्त्यनुसारेण कृतिप्रकृतिनाम्नि रूपैक्यविषयेप्यसञ्जातविरोधन्यायेनैवं सञ्जातस्संशयः ।

तदत्र कृतिप्रकृतिकर्तृनामरूपैक्यगते विवादे विषये, कलिकातानगर

वासिभिरागमानुसन्धानसमितीयैर्मूलकृते: कृतिमूलस्य वा प्रबन्धस्य सम्पादकैस्तत्प्रकाशकैश्च, श्रीस्वामित्रिविक्रमतीर्थपादैरुपोद्घाते स्वीये— "ग्रन्थस्यास्य कर्ता कालिदास इति ग्रन्थपरिशीलनेनापि निश्चेतुं शक्यम्" इत्युद्घोष्य "जनश्रुतिरप्येवं किल। सा च सत्या" इत्यादिना जनश्रुते: स्वश्रुत्यासाकं श्रुतिमूलतां सम्पाद्य, मूलग्रन्थेपि महाकविनैवानुत्तरमहार्थक्रमोपासनारहस्यबोधिकया 'कालि' इति, तथा 'कालिदासेति' च, तथा 'स्वोदितं दासजल्पितं' 'कालिदासरचितां च पंचिकाम्' इत्यन्तं श्लोकसङ्ख्यायां ३-२७२-३०६-३०७-३०८ श्लोकेषु स्वात्मगुरुदेवताचक्रक्रमनामरूपान्तमूर्त्यष्टके षड्विधैक्यबोधिकया प्राकृतप्रबन्धरचनयापि निवेदितमैक्यमित्याशयेन जानश्रुतिना शब्देन साकं स्वीयां श्रुतिं कृतिप्रकृतिकर्तृनामरूपैकीकरणे स्वत: प्रमाणशब्दवत्स्वयमपि प्रमाणयद्भिस्सुसमाधिना समाधाय विश्रामितश्चातुर्यचतुराप्राच्यप्रगल्भो वाग्विवाद: । अथ तदीयचिद्गगनचन्द्रिकामहाकृतिप्रकृत्योस्तदीयत्वातदीयत्ववाग्वादसमाधाने विश्रान्तौ वा स्वन्तत्वास्वन्तत्वाभ्यामपीदमेव मानं तत्वजिज्ञासूनां पर्याप्तम्। यदत्र नादनाधतदन्तनवकत्रयैकरूपया, वैषयिक्या, वैदिक्या वा अहंग्रहोपास्त्या, संसिद्धकालीकालमिथुनतादात्म्यभावस्य, महाकवेर्वैदिकतान्त्रिकपञ्चवाहमहार्थक्रमैकरस्येन, नादनाधतदन्तनवकत्रिपुटीत्रयात्मकानां, वागर्थषडध्वमयानां त्रिचतु:पञ्चवाहमहार्थक्रमाणां, वर्णनावसरे अन्नमयाद्यानन्दमयान्तेषु, वैदिकपञ्चकोशेषु मध्यमसान्न्यायेन तदीयप्राणमनोविज्ञानमये सूक्ष्मलैङ्गिके, गगने, वाङ्मन:प्राणवैश्वानरनादमयशरीरस्य, कालीकालेश्वरमिथुनस्य, सकलजगत्कारणत्वविवक्षया "परस्परतपस्सम्पत्फलायितपरस्परौ। प्रपञ्चमातापितरौ प्रांचौ जायापती स्तुम:" इत्येतल्लक्षणलक्षिते अनादिनादषडध्वगर्भिते प्रवृत्तिनिवृत्त्येकरूपे प्रमात्रादिमहात्रिपुटीसमष्टिमिथुने महासूत्रात्मन्येव "यतो वा इमानि भूतानि जायन्ते" "यस्य निश्वसितं वेदा: यो वेदेभ्योखिलं जगत् निर्ममे" "अस्य महतो भूतस्य नि:श्वसितमेवैतद्यदृग्वेदो यजुर्वेदस्सामवेद:" इत्युक्तलक्षणश्रुत्यादितन्त्रागमान्तप्राणनादवागर्थेषु प्रमाणीभूतानां स्वरवर्णकलामातृकानां त्रिचतु:पञ्चीकरणादिना तुरीयतदतीतानन्दमयोपाधिसमन्वयेन च "चिछो-

चनेन सततं शिवमीक्षितमन्वये च सद्भावं ! लब्धुंच पूर्णभावं यदि चेतस्स-मुपाध्वमिमाम्'' इत्यादिना । "स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतं पृथिवीचान्तरिक्षं च द्यौश्च दिशश्चावांतरदिशाश्च सवै सर्वमिदं जगत्ससभूतगं स भव्यम् " इत्यादि तैत्तिरीयमहानारायणीयोपनिषदुपान्त्यखण्डिकोक्तन्यायेन, "धामयद्भवति मुद्रया समं" इत्यादिना वक्ष्यमाणधामसंविद्वर्णक्रमत्वैक्येन सार्कं प्रकाशानन्दमूर्तिमयवृन्दचक्रोपास्ति सांगोपाङ्गं वर्णयतो महावीरधौरेयस्य, कविचन्द्रस्य, वागर्थैक्यस्वरूपतत्वाववोधने, स्वोपमानच्छ्मना, स्वीयएव रघुवंशमहाकाव्यारम्भमङ्गलश्लोकः "वागर्थाविव सम्पृक्तौ'' इत्यादिना सर्वेषां वादिप्रतिवादिनामसाध्यकोटिप्रविष्टतया ऽ विप्रतिपन्नसूत्रप्रायः। "मानिषा''देत्याकारकश्रीमद्रामायणसूत्रश्लोकवत् "याहमित्युदितवाक्परा च सा" इत्यादिना स्वार्थतोप्यनूद्य सकलवागर्थप्रतिपत्तिमयाय महाविद्यानन्दलाभायां,ततः । "पूर्णपीठकृतं सिद्धे स्तद्भावस्तवमादरात्। वानरार्थे महागुह्यं श्रीवत्सो विदधे स तु" इत्यन्तग्रन्थसदर्भेण तद्भाष्येणेव पूर्णपीठीकृतश्चेति स्वोक्त्या स्वग्रन्धानुशीलनेनचावगम्यते । किंचात्र "धाममुद्रावर्णकलासंविद्भावस्वभावतः । पातानिकेतद (सृ) ष्ट्या च बृन्दचक्रं प्रकाशितं'' इति तन्त्रालोकाद्युक्ताष्टविधवृन्दचक्रोपास्तिदष्टिभेदानां धामसंविद्वर्णक्रमत्वयान्तर्भाववर्णनेन । "अष्टधा स्फुरति या पुरी , अष्टपुर्युदितवासनात्मना'' इत्यादितत्तत्पुर्यष्टकवासनाभेदवर्णनेन चाभिज्ञानशाकुन्तलनाटकीयनान्दीश्लोकवर्णितात्मीयमूर्त्यष्टकप्रत्यभिज्ञापनम्। प्रथमविमर्शे द्वितीयमङ्गलश्लोकस्य तुरीयचरणपूरणे स्वीयमालविकाग्निमित्रनाटकीयनान्दीश्लोकतुरीयचरणस्यैव 'सन्मर्गालोकनाय व्यपनयतु स व स्तामसीं वृत्तिमीशः" इत्यस्यानन्यवागर्थभावादिचौर्येण कण्ठोक्त्युपनिबन्धनादीनिवहूनिव्यावर्तकान्यस्या अपि कृतेः प्रकृत्या साकं तदीयतां पोषयन्त्येवेति पुनरुक्तप्रायं । किंच 'वाङ्मयामृतनिधिः प्रकाशते कालिदास इति कोपि चन्द्रमाः। येन चिद्गगनचन्द्रिका कृता हृद्गुहासु सुधियां हृतं तमः'' इत्यादि कविचक्रवर्तिविरचितं हृदयचन्द्रिकावचनपथ्यस्मिन्नर्थे शाब्दं प्रमाणपदमधितिष्ठति । तथात्र प्रथमविमर्शएव 'यः किलास' इत्यादिसूत्रात्मप्रमेयके सूत्रश्लोके तदीयमहाप्रमे-

येन सूचितपरशाम्भवमिथुनघटकी (घटी) भूतेन पराहंमन्यमयवागर्थचरणसंघट्टेन मिश्रितवासनाचरणमयस्यानुत्तरमहानिर्वाणचरणमहार्थस्य वर्णनवैशारद्येन मेघदूतकाव्ये गौरीशिखरवर्णनावसरे यक्षकृतमेघोपदेशच्छलेन 'यस्मिन् दृष्टे करणविगमादूर्ध्वमुद्धूतपापाः कल्पिष्यन्ते स्थिरगणपदप्राप्तये श्रद्दधानाः' इत्यादिना वर्णितमहाशांभवचरणविभूतिरनाहूतापि स्मृतिपथमधिरोहतीति तद्विदोत्र प्रमाणमित्यनुत्तरसंप्रदायमहार्थसिद्धानां महदुदाहरणम्। अथापि-मदीयस्संशयस्तदवस्थएव कालिदासकृतिप्रकृतिनामरूपैक्ये। यतः स्याश्काशन रूपांतरमापन्नाप्यरूपा सरूपा वा तदीयचिद्गगनचन्द्रिकाकृतिप्रकृतिर्महाकृतिरिवेत्यसन्मूलस्य तुर्यातीतमप्यतीत्य वर्तमानस्य प्रपञ्चपञ्चमस्यानुन्मूलनात्संशयस्येति पुनः पुनरुक्तिभयमप्यविगणय्य सुदूरं धावन्विमर्शकाग्रणीभ्यः प्राप्याप्राप्यविद्वद्वीरधौरेयेभ्यो जिह्नेमि न साहसादुल्लिखितुमपीति क्षन्तव्योस्मि विनिवेदनलज्जयाप्यलमामूलचूडमस्मदीयव्याख्यया साकमपरोक्षमूलकृतिविमर्शकाणामिति चावेद्य विरम्यते मेषाण्डतोलनतुल्यादप्राच्यविभ्रष्टविमर्शनप्रयासात्।

किञ्चात्र किंचिद्विज्ञानामप्रस्तुतापि प्राकृतकालिकी स्वानुभूत्याऽप्राकृतकालिकी च वस्तुगतिर्मायया ऽमायकलोकवञ्चनकारिणी धर्माचार्यवेषसञ्छन्ना, महाजनानां जागृतये किंचिदिवावेद्यते "सिद्धनादकृततत्क्रमस्तुतेः कालिदासरचितां च पंचिकाम्" इति तुरीयविमर्शपर्यन्तोक्तां महाकविचन्द्रसूक्तिं प्रमाणीकृत्यैतन्मूलकृतिप्रकृतेरादिसिद्धनाथकृतायाः क्रमस्तुतेस्सुविलिप्सया महान्तमपि व्ययप्रयासादिकष्टमविगणय्य, सुदूरं परिभ्राम्य, दुस्सहं दुःखमपि सोढम्। तदलाभेन तत्सर्वं भस्मनीव हुतम्। ततो स्वसद्गुरुनिर्वाणचरणप्रसारबलेन महाकवेरनुत्तरस्वरनादबिन्दुकलात्वागर्थक्रमे त्रिचतुःपञ्चपुटीप्रोत:स्वच्छन्दचारिता ;साक्षादुपलब्धेप्यनुत्तरसिद्धान्तप्रबन्धदारिद्र्येपि यथा व्याचिकीर्षुता गलग्राहिणी संवृत्ता तत्पुरस्तादुत्तरपीठिकायां मूलागमनिवेदनप्रकरणे अनुपदमावेदयिष्यते। परंत्वत्र राष्ट्रराजकीयविद्वरादिना विड्वराहादिनेव विरुद्धदिग्देशकालबाधादिभयेन लौकिक;द्रविणलोपेन चायसाक्षरमुद्रापणोपयुक्तविषमयग्रन्थाक्षरपङ्क्तेस्सनादेः कृ-

त्यपञ्चकक्षारोदादन्तराययादस्संकुलाद्धुत्तीर्य क्षीरोदप्रान्तसंचारिणीं दिव्यच-कोरिकां वर्षद्वयादारभ्येयत्यपि कालस्रोतसि धर्मात्ययोषस्सु चक्रवाकीमिव शारदप्रदोषेषु लौकिक्या अपि चन्द्रिकाया आस्वादतृष्णया चान्द्रायणव्रत-स्थामिव विरहिणीमुपोषितामवलोक्यापि "सर्वारम्भास्तण्डुलप्रस्थमूला:" इत्य-भियुक्तसुभाषितं स्मारं स्मारं का गतिरितीवोर्ध्वदृक्कागतपत्रादिलोपेन तन्नि-ष्क्रयमूल्यदारिद्र्येण तदर्थषड्ध्वपर्यवसितपाथेयलोपादिना च महते दुः-खाय भाजनीभूयैव परमदारिद्र्यपूर्णपीठीकृतश्च यावद्विरज्ये, इयत्यन्त-राले यथावदनुभूयमानदेशपर्यटनादिकं कागतपत्रदारिद्र्यप्रभृति पाथेयलो-पावधिकं च सुदुस्सहदुःखग्राममचतुरक्षीणमपि चतुराक्षचातुर्येणाध्यक्षम-क्षीकृत्य शिकिन्द्राबाद् (दक्कन्) नगरे यस्· वि. शास्त्रिमहोदयाः 'तृणानि भूमिरुदकं सूनृता वाक्तुरीयका । सतां गेहेषु सततं नोच्छिद्यन्ते कदाचन' इत्युक्तमानवमहास्मार्तधर्मस्य स्वयमादर्शीभूय स्वावसथ्यप्रदानपूर्वकं वक्ष्यमा-णक्रमेणास्या दिव्यचकोरिकाभ्याख्यायाः महासीतासावित्र्याः मैथिलो रा-जर्षिरिव कालिदासीयहृद्योम्नि चिद्गगनचन्द्रिकायास्सौभिकयज्ञवाटे वेदीक-र्षणादियावज्जगत्या रामपाणिग्रहान्तखण्डकथायां पाशुपतधनुराकर्षणपण-बन्धेन यावद्भारवहनार्थमुपनायकः पीठमर्द इव यावत्प्रत्यभवन् , तेष्वेव दिनेषु शौष्कल इव रावणपुरोधाः धर्मध्वजधर्माणामपि द्रोग्धा तादृश-स्यैव विरूपधर्माभासाचार्यपीठस्य व्यवस्थापकः किल शाङ्करापशदो नाम क्वचिन्महाराले "आदिलाबादुनगरीयधर्मविप्लवसमीकरणार्थमग्निहोत्रशास्त्रि-णो मयासाकं मासद्वयं यावत्पीठसन्निधौ धर्मव्यवस्थापनादिना कार्यक्रमे-णोपवासार्थं प्रेषणीया" इति जगद्गुरुपीठमिति नाममात्रश्रवणेनैव प्राकृतध-र्मध्वजेषु कल्यन्तजगद्गौरवेषु पीठधर्मद्रोहिषु धनागमार्थं शिक्षितधर्मध्वज-रहस्येष्वननुभवदोषेणाजागरूकतया सुलभप्रतारणान् एस्· वि. शा-स्त्रिमहोदयान् धार्वाडनगरीयाणां नागेशशास्त्रिणां वाराणसीयानां राजेश्वर-शास्त्रिणां च महोपाध्यायानां स्वलिखितपत्रिकाणां प्रतिसमाधानकल्पित-पत्रादिभिश्छद्मना सानुनयमिव सुगुप्तशाठ्यलिङ्गैरतिगाढं विप्रलभ्य याव-दयाचयत् तावत्तैव तदानीं स्वीयं दिव्यचकोरिकासम्मुद्रणादिमहाकार्यक्र-

मभारं निवेद्यापि परप्रतारणपण्डितेन तेन सुदूरं विप्रलब्धतया स्वोपक्रान्ते मुद्रापणादिकार्यभारे लब्धमिव हस्तावलम्बं मत्वा तत्सर्वं निश्वस्याप्यवितथं विश्वस्य यावदाविःश्वसन्- तावदयि भोः! 'विरूपाक्षं खलु पीठमकुलं कुलविद्यासु संहारैकतत्परं मयानुभूतपूर्वमेव' इत्याद्यस्मदीयं हितवचनमप्यविगणय्य सुगाढविप्रलब्धतया मां तेन शांकरापशदेनसाकं पीठसन्निधौ धर्मविप्लवसमीकरणच्छद्मना तादात्विकविद्वद्गोष्ठीपपूर्तये बहुधाऽभ्यचोदयन्। पूर्वानुभूतदुश्चरितोप्यहं एसू. वि. शास्त्रिमहोदयानां पीठगौरवेण दाक्षिण्येन चोभयतः पाशबद्धश्शकुन्तइव तत्पीठसन्निधौ 'उरभूवृषणभृंशभूमालससृगालवत्। राजन्बहून्यहान्यत्र यापितानि वृथामया'इति केनचिद्विपश्चिता सुभाषितमेषाण्डपतनभूमालससृगालन्यायेन तत्रैव प्रत्यहं शिकिन्द्राबादूनगराच्छास्त्रिवर्यैः पत्रादिभिराहूतो यियासुरेव 'श्वः परश्व' इत्युत्सवविग्रहैर्गुरुवर्यैश्शांकरापशदेन च कुबेरानुजायमानेन वार्यमाण एव किंचिन्न्यूनं मासचतुष्टयमनैषम्। अत्रान्तरे स्वीयग्रामे पुत्रप्रतिरूपः श्रीमान् स्वधर्मादप्रच्युतजीवितो धनाढ्यो मदीयो बहिश्चरः प्राणइव वणिङ्मणिः शिष्यः मुमूर्षुरास्ते सत्वरमागम्यतामिति दिदृक्षातिशयेन यदास्मि तन्त्रीवार्तयाऽऽहूतः तदानीं शांकरापशदेन पाथेयेनाप्यनुपकृत्य वृथैव प्रहितः। मदीयः पाथेयभारोपि यदा शास्त्रिवर्याणां मूर्ध्न्यपतत्। तदा खलु मया साकं शास्त्रिवर्याणामपि पूर्वोक्तशाङ्करापशदीयउरभूवृषणभृंशभूमनिवृत्तिश्शुक्तिमुक्तेव मुक्ताफलेन साकं सप्रयासं संपादितेत्यादीनि बहूनि शांकरापशदीयानि स्वेच्छानिच्छापरेच्छाप्रारब्धान्यन्तरायसहस्राणि दैवेच्छाप्रारब्धानीवोत्तीर्यापि दिव्यचकोरिकाख्या व्याख्या जगत्याराम पाणिग्रहोत्सवानन्दे प्रथमद्वितीयविमर्शखण्डोत्सवानन्दपात्रतामेतावतीमप्यनुबभूवेति महदिदमानन्दस्थानम्। अत्र मूलकृतावागमानुसन्धानसमितीयेनेतरेणवांग्लपण्डितवरेण विलिख्य व्याख्यातेचागोत्रवित्प्रवरतुल्ये आंग्लवाङ्मयोपोद्घाते'चूर्णपीठकृतं सिद्धे'रित्यानुष्टुभीं कवेरंतिमश्लोकप्रतिज्ञामुदाहृत्य प्रबंधस्यास्यश्रीवत्सापरनामा चोरितकालिदासमहार्थवरनामा च कश्चित्पंडितवरः कर्तेव प्रतिभातीति श्रीवत्सवागर्थार्थकलाया अप्यविवेकेनाज्ञानेनवा विलेखनपांडित्यसाहसं पंडितानामिव प्राचीनानां मुंडितानामपि महांतमुपहासमापादयती-

त्यलं कालेयविजृंभणविमर्शपांडित्येन । स्थालीपुलाकन्ययेनाप्येतत् श्लोकव्या-ख्याविमर्शकाणामपरोक्षमेव प्रतिभासत इत्यनवमापि नवमीव लेखिनी तदङ्क-नात्स्वांकाच्च प्रतिनिवृत्ता स्वरूपे विश्राम्यतीत्यतो न तत्राप्याग्रहः ॥ इतीय-मुपोद्घाते पूर्वपीठिका ॥ श्री श्री श्री ॥

अथैतस्याश्चिद्गगनचंद्रिकायाः प्रमेयगुरुक्रमप्रणालिकया

स्वप्रकृतेरिव सप्रमेयस्तदागमो नाम-

## उपोद्घातोत्तरपीठिका ।

अथैतस्य मूलप्रबन्धराजस्य राजमहेन्द्रवरनगर्यां बहुधान्यादिवर्षे चाश्विने शुक्लपक्षे- १९३८ सं - १० मासि कारणांतरेणानिवृत्तगतौ वर्तमाने मयि मन्निकटमागतेभ्यो यदृच्छया ब्रह्मश्रीयुतेभ्यः करोंपाह्वजोगय्यशास्त्रिमहोदयेभ्यस्सकाशात्संक्षेपतः किञ्चिदिव टीकारिरचयिषया तीर्थीकरणार्थमिवागमः । तत्र यद्यिहमदक्षिणोपि दाक्षिण्येन प्रवर्तेयम्, गण्डस्योपरि पिटका संवृत्तेति लौकिकीं नीतिमनुसृत्याऽकामयानोपि तन्मुद्रणादौ महताडम्बरेण संसाराडम्बरेणेव गले गृहीतो भवेयमित्यागामिचित्रितगूढाभिसंधितो भियाचानुत्तरस्रोतःकाठिन्यप्रयुक्तया द्वित्रिवारं निषिध्य विरव्यमानेनापि, किंचिन्न्यूनपंचाशद्वार्षिकाध्ययनसंपादितानामनात्मकलानामिव स्थितानां चतुष्षष्टिकलानामाविद्यकार्थकामदोहनाय, मानुषवित्तार्जनादावनुपयुक्तत्वेन,दरिद्रमनोरथवद्दुर्विनियोगभयान्नु, भारतीयवागर्थपरिभाषाऽनांतरीयकायां भाषावाङ्मयपूजायामधीतकलानां मंत्रपुष्पाञ्जलिप्रदानलोभान्नु, वाङ्मयमहायागीयावभृथस्नानलोभान्नु, स्वात्मदेवताप्रेरणबलान्नु, अज्ञातमूलात् भवितव्यतावलात्किल बलात्कारेणैव प्रवृत्तिरूरीकृता । ततो गृहानागतेन ग्रहगृहीतेनेव, मासषट्कमनन्यदृशा, रात्रिंदिवं मष्याकृतेरिव महाकृत्या, लांछितेयं चकोरिकानामाभासचकोरिका व्याख्या । तदनु तदनुत्तरसिद्धांततंत्रग्रंथदारिद्र्येण तल्लिप्सया पुरैव परिचितानामस्मत्सगोत्रत्वेन सोदराणामद्ययावद्देकहायनादर्वाक्कीर्तिकांताया आकल्पसंस्थापनेनालंकृतश्रीनगराणां ब्रह्मश्रीयुत-

नां करोंपाह्वसुब्रह्मण्यशास्त्रिमहोदयानां एल्- एल्- बि- पट्टभद्रतया बळ्ळारि ङि॥ होस्पेट ङि॥ मुनसफ्कोर्टुन्यायस्थाने प्राड्विवाकानामप्यनुत्तरसिद्धांत- पारंगतानां सविधमवाप्य, उषित्वाच सार्धमासं, १ तन्त्रालोक २ तन्त्रसारलघु- विवृति ३ मालिनीविजयवार्तिक ४ हृदयचन्द्रिका ५ सौभाग्यवासनापद्धति ६ महानयप्रकाश ७ आनन्दकल्पलतिकादिषु तत्तदुपयुक्तग्रन्थभागमुपलभ्य मध्याकृतिलाञ्छितामाभासचकोरिकां यावदाश्राववयिषं तावत्तैवानन्दोल्लासभ- रितैस्तैर्द्वाविंशतिवर्षकल्पेभ्यः प्राक् विलिख्य सम्पादिता संरक्षिता च, मूल- कृतिमात्राकल्पा, चिद्गगनचन्द्रिकाऽद्य यावदन्वर्थनामा, सालङ्काराश्रमपूर्णा, विश्रमणीया कल्पा च समजनीत्यामूलचूडमसंलक्षितक्रमचकोरिकाभासा स- हायेनैव संतृप्तिज्योत्स्नाभरितान्तरङ्गतया विनिश्वसितमिव । ततः स्वीय- मानन्दोल्लासभरं पत्रिकामुखेन प्रकटय्य च कृतकृत्यं मन्यमाना इव दिवं ययुः । पश्चात्तां पश्चात्तापलाञ्छितां तदनुतापानुबद्धहृद्व्योमा दिव्यचकोरी- करणकौतुकेन खद्योत इव तैस्साकं दिवमुत्पतिष्यन्नागर्थषडध्वपथेन ना- क्षलं व्योम यदा निरणैषम्, तदास्मच्छारीरकैकसम्बन्धिनोपि विनीतान्ते- वासिकल्पाः त्रिलिङ्गसंस्कृतांग्लभाषात्रितयेपि राजकीयभाषानियमानुरुद्धवि- द्याशाखायां एम्. ए. विद्वान् इत्यादिपदवितयोत्तीर्णपट्टभद्रतया हैदराबाद् (दक्कन्) नगरे निजांकालेजीनामकांग्लविद्याशालायां संस्कृतान्ध्रभाषाध्या- पकेषु प्रोफेसर पदाभिषिक्ता अप्यनुत्तरसिद्धान्तमहानन्दसाम्राज्यपदेपि कृ- ताभिषेकतया रामानन्दनाथदीक्षानामशालिनश्च एस्. वि. शास्त्रीत्यांग्लव्या- वहारिकनाम्ना ललिताशतक-हंसतारावली-कामविलासादिनैकखण्डकाव्यक- ल्पनिर्मातारस्सरिपेल्ल विश्वनाथशास्त्रिमहोदयास्सानन्दसम्भ्रममांग्लपण्डितलो- कमहोपकारायास्याः कृतिप्रकृतेः श्लोकवाक्यार्थमात्रस्यांग्लभाषापरिवर्तनेपि श्रद्धापुरस्सरमेतदीयं दिव्यचकोरिकाव्याख्यामुद्रापणादिभारं स्वस्कन्धयोर्यु- गन्धरवत् स्वयमेवासिषजन्निल्यहो महत्साहसम् । यावदेवं गुरुत्रयमुख्यया नाथपरम्परयाऽयमस्यागमप्रकारः । अत्रान्तरे अद्य गुरुद्वयस्य मानवसिद्धौघ- मिथुनस्येव कुलसहस्रारपतितस्य करोंपलाञ्छितत्वेन मदीयस्यात्रिवंशसमु- द्भूतस्य विद्यावीर्यैकप्रभवस्यात्रिगोत्रकुलस्यापि सत्रिवंशपूरणेन लोकप्रत्याय-

नार्थमिव तादृशत्वेन तत्रैव त्रिचतुःपञ्चवाहक्रमभेदेपि तल्लांछनार्थमिव करांश-ब्दस्य प्राकृतान्ध्रभाषापरिभाषया दण्डशब्दपर्ययताप्रयुक्तदण्डक्रमानुवृत्त्या च उक्तलक्षणत्रिचतुःपञ्चवाहक्रमभेदभिन्नदण्डक्रमानुवृत्तावपि त्र्यर्थमहाक्रमलोभे-नेव त्रिदण्डक्रमानुरुद्धेन दैवानीतेन त्रिदण्डसन्यासेनेव शिष्यौघपंक्तिपतितेन मयापि पुरा मष्याकृतिलांछितेव भासमाना ऽऽभासचकोरिका कुलाकुलसह-स्रारसामरस्येनैव दिव्यचकोरीकृता चेतीयता कालक्रमेण समूलकल्पः, प्रब-न्धागमोपि, आगमइव धामसंविद्वर्णक्रमैस्त्रिपुटीक्रमानुबद्धस्त्रिवृत्करणेनेव प्रका-शानन्दमूर्तिचक्रत्रयानुबन्धनापि, कलिकातानगरस्थागमानुसन्धानसमितीय-त्रिविक्रमतीर्थपादप्रेरितोप्यस्त्रिविक्रमक्रमानुवृत्त्या तुरीयकुलक्रमानुरुद्धे, वंश-दण्डपर्वणि, मदीये मयि वा, तुर्यातीतमहानन्दमूर्तिचक्रीकृतश्चैतस्यनेन महा-नन्दवीचीसंरम्भरसोल्लासभरेणैतत्कृतौ निर्वाहायकिलातीततुर्यक्रमोपि तुरीया-नन्दमूर्तिचक्रमात्ररूपोस्मि संवृत्तः । "मुण्डनं ज्ञानरूपणे दण्डनं च क्रिया-त्म(ना)ता । मुण्डदण्डक्रमौ तेन मतौ ज्ञानक्रियात्मकौ ॥ इति महार्थमञ्जरी परिमलादिषूल्लिखिततन्त्रान्तरवचनोक्तनीत्या ऽस्मदीयक्रियामयानन्दचक्रदण्ड-क्रमस्य पूर्वनिरूपितदिशा सरिपेल्ल विश्वनाथशास्त्रिमहोदयैः स्वयंस्वीकृतत्वेनाव-शिष्टमुण्डक्रममात्रे विचित्रभानाविव चित्रभानावनुवत्सरेऽकुलसहस्रेरेच स्वभा-नुना विश्रांतिश्चोपलब्धा । अत्रैवान्तराले पुरा पूर्वपीठिकायांविलिख्य विज्ञापित प्रकारेण विरूपाक्षपीठाभासऽकार्यव्यवस्थापकस्य शाङ्करापशदस्य स्वात्मधर्म-द्रोहेण कृतं महाप्रतारणमप्यनुभूय इतिकर्तव्यतामौढ्येन श्रीशास्त्रिमहोदयैर्वि-जयनगरसंस्थानपण्डितप्रकाण्डानां श्रीमहामहोपाध्याय कलाप्रपूर्णादिविरुदा-ङ्कितानां श्रीताता सुब्बरायशास्त्रिमहोदयानां श्री 'न्यायभूषण' पेरि लक्ष्मी-नारायणशास्त्रिमहोदयानां च संशोधनेपि प्रेरितः पुरा कल्पीयामाभासच-कोरिकामेवादायागमम् । तत्र तयोस्सैवाश्राविता । तच्छ्रवणसंतुष्टयोस्तयोः परितोषपत्रिकाप्रदानमपि तस्या एव न दिव्यचकोरिकायाः । तथैव हरि-हरशास्त्रिप्रभृतीनामिति पुनरुक्तप्रायम् । तस्मात्तत्तदीयपत्रिकाऽऽनयनोत्तर-मेवाभासचकोरी दिव्या कृतेति पाठकमहोदयेभ्यो विनिवेद्य विरम्यते प्रब-न्धागमोदन्तविलेखनादेः ॥

अत्रास्मिन् कलिकातानगरस्थागमानुसन्धानसमितीये चिद्गगनचन्द्रिकाख्ये मूलप्रबन्धे श्लोकपञ्चकं नोपलभ्यते । तच्च– "खे निरस्तसकलक्रियाक्रमे' 'आदिमान्तिमगृहीतवर्णराश्यात्मिका' 'अम्ब! केचिदमृताम्बुचिन्मयीम्' 'यत्र यत्र मिलिता मरीचयः' 'अम्ब! तावकपदद्वयार्चक."' इत्याकारकम् । तत्र प्रथमतृतीयतुरीयश्लोकत्रयं मूलकोशसम्पादकैः स्वामित्रिविक्रमतीर्थपादैर्मूलग्रन्थसमाप्त्यनन्तरं योगिनीहृदयसेतुबन्धादिनिबन्धग्रन्थेषु तत्तदाचार्यैः प्रमाणतया परिगृहीतेषूल्लेखनेन प्रदर्श्यापि मूलप्रबन्धे स्वोपलब्धे तदनुपलम्भात्किल स्थानान्तरप्रक्षेपसाहसे सङ्गतिप्रच्युतिभयेन वा हेत्वन्तरेण स्वमुद्रिते मूलकोशे मुद्रणात्परित्यक्तम् । द्वितीयः श्लोकः ग्रन्थान्तरे पञ्चमोपि वन्दाराश्रमपूज्यपादकृतसौन्दर्यलहरीव्याख्याने च प्रमाणीकरणेनोपलब्ध इति क्रमेण 'खे निर'स्तेत्यादिश्लोकद्वयं द्वितीयविमर्शे ५६-७५ अङ्काङ्किते स्थानद्वये 'अम्ब केचि' दित्याद्यवशिष्टश्लोकद्वयं, तृतीयविमर्शे- क्रमेण १२९-१७३ स्थानद्वये च पञ्चममपि, तुरीयविमर्शे-२४१ स्थाने च तत्तत्सङ्गतिलोभेनैव प्रक्षिप्य व्याख्यातम् । अत एतत्पञ्चकं तेषु वा स्थानान्तरेषु वा विमर्शकैः पण्डितवरैः प्रक्षेपणार्हतया बोद्धव्यमित्यपि निवेद्यत इति शिवम् ॥

—•अथ चिद्गगनचन्द्रिकाविषयाद्यनुबन्धचतुष्टयादिप्रमेयसारांशः•—

सेयं महाकृतिः विमर्शचतुष्टयोपेतगह्वरविषयराजसङ्कलितशब्दार्थशरीरतया कालिदासमहाकविचन्द्रस्यैव महाकृतिर्नान्यस्येत्यपि सुवचा । तत्र कीदृशी महाकृतिः, कोवा गह्वरो विषयराज इत्यस्योत्तरं प्रबन्धनामैव विवृणोतीति ब्रूमः । कथं? चिद्गगनं नाम ज्ञानाकाशः दाहराभिन्नः । चन्द्रिका खलु चन्द्रकान्तिः । सा च स्वस्वधर्माधर्मविषयकरागद्वेषभेदभिन्नमनोबुद्धिकलातुल्येन, त्रिवृत्कृतपञ्चाक्षरीमयेन, पञ्चदशाक्षरीमयेन वा, वागर्थषडध्वगर्भितार्थाध्वत्रिकमयेन, तादृशेनैव नादबिन्दुकलात्रिपुटीत्रिवृत्कृतपञ्चाक्षरीमयेन, पञ्चदशाक्षरीमयेन वा, वागर्थषडध्वगर्भितेनैवाक्षमालासु शाब्दाध्व-

त्रिकतुल्येन च, साङ्केतिकपरिभाषया देशकालाभिन्नप्रकृतिपुरुषैकरूपेणेति संग्रहवाक्यमिति बोध्यम् । तादृशेन शुक्लकृष्णपक्षतिथ्यादिभेदेन तत्तदीयचन्द्रकलाप्रभेदेन वा "पूर्णताकृशतयोर्यदन्तरम्" इत्यादिना प्रथमविमर्शान्ते, "वासरेशरजनीशयोः कला" इति द्वितीये, एवमेव तृतीयतुरीयविमर्शयोश्च तत्र तत्र वक्ष्यमाणेन देशकालमयमानवपित्रादिव्यावहारिककालमानप्रभृतिदेशकालातीतत्वेन शुद्धपारमार्थिकदैवपित्रन्तकालमानकल्पनाप्रभेदेन— "महर्षयस्सप्त पूर्वे चत्वारो मनवस्तथा । मद्भावा मानसा जाताः येषां लोक इमाः प्रजाः" इति गीताचार्योक्तलक्षणचतुर्युगादिचतुर्दशयुगान्तमहामानवपारमर्षशास्त्रीयव्यवहारेऽपि छन्दःकलाकालकर्मत्रिपुटीकल्पप्रभृति चतुर्युगसहस्रब्राह्मपर्यन्तं तृतीयविमर्शे वक्ष्यमाणब्रह्मविग्रहकलाधिरोहणार्थं छन्दःकलाकालकर्मत्रिपुटीकल्पभेदेन च, तत्तदाधिकारिकविद्याऽविद्यासम्पद्बृंहणे क्रमेण क्रमाक्रमशब्दिताभ्यां वृद्धिक्षयाभ्यामन्ततः कुलाकुलसामरस्यात्मकं कालीकालमिथुनतादात्म्यापादनमेव पार्यन्तिकं ब्रह्मविग्रहकलाधिरोहणं वैदिकम् । तान्त्रिको वा महार्थश्च तच्चाधिरोहणं महार्थो वा । यामलादितन्त्रागमदृशा सत्तात्रयाङ्गीकारेण प्रकृतिपुरुषविभेदस्य व्यवहारसत्तायामन्तर्भावेन चोत्तमाद्यधिकारप्रभेदभिन्नं पश्चिमाद्यूर्ध्वाम्नायान्तत्रिचतुःपञ्चार्थमहाक्रमैकरूपं वा प्रमात्रादित्रिपुटीसामरस्यात्मा अहंग्रहोपासनारूपः पार्यन्तिको महार्थः । वेददृशा तु, व्यवहारसत्ताया अनङ्गीकारात्प्रातिभासिकपारमार्थिकसत्ताद्वयशब्दितप्रकृतिपुरुषमात्रसामरस्यात्मा तुरीयः परमपुरुषार्थः । महापुरुषस्वरूपमेव वा । इति तान्त्रिकवैदिकदृग्विवेकेन कालशिवस्य कारणोपाधेः कर्ममयशिवस्य कार्योपाधेर्वा ब्रह्मविग्रहकलाधिरोहणं निर्णेयम् । तथा हि एकैकस्मिन् ब्राह्मे दिने तदीये कर्ममये वा कल्पे चतुर्दशमन्वन्तराणि खलु यापयितव्यानि । तत्र चतस्रः दशा अवस्थाः येषां मन्वन्तराणां तानि चतुर्दशानि, चतुर्दशसङ्ख्याकानि च । इत्यादिव्युत्पत्तिभेदेन तुरीयविमर्शे "या दशासु निखिलासु सर्वतः" इत्यादिना वक्ष्यमाणगुप्तिभाषितजगद्विजृम्भणलक्षणेन गायत्र्यादिजगतीछन्दःपर्यन्ततया क्रमेण चतुरक्षरोत्तरं वैदिकं सप्तछन्दोमयमूर्तिकं, तान्त्रिकं च पञ्चपञ्चदशाक्ष-

रीप्रभृतिसप्तदशाष्टादशाक्षरपर्यन्तं वैसर्गिकदशामिथुनसामरस्येन स्वराक्षरकदम्बमूर्तिकं महाषोडशीकलामूर्तिकं च जागतं मान्त्रवीर्यमेव, वागर्थषडध्वशरीरेणान्योन्यत्रिपुटीगर्भितेन शिष्यौघादिपरौघान्तगुर्वौघषडध्वशक्तिरूपेण परिणता, मातृकामयी, वागर्थषडध्वशक्तिरेवेति महाकविना प्रबन्धेऽस्मिन् उच्चैःकण्ठरवेणैवोद्घोषितम्। एतदेवान्तः पुरुषे कालीप्रकृतिः कुलविसर्गमिथुनात्मना बहिश्च काली, कालप्रकृतिः पुरुषात्मना च "अन्तर्बहिःपुरुषकालरूपं" इत्यादिना वेदवेदाङ्गपुराणेतिहासकाव्यपर्यन्तं कल्पपञ्चकभरतवाङ्मयेचोद्घोष्य गुप्तिभाषितजगद्विजृम्भेण मान्त्रवर्णलक्षणेन सद्योजातादिपञ्चब्रह्ममयमुखपञ्चकात्मनापि वर्णितमिति प्रकाशविमर्शैकरूपया सुसूक्ष्मदृशाकलनीयम्। अत्र परन्त्वनावृत्तचक्षुष्कतादोषेण पुरुषापचारेणापरकालसर्पदष्टानां तद्विषवेगसहकृतेन दिग्देशकालकलात्मिकामात्मीयां त्र्यंशीं त्रिपुटीमनात्मतया बहिःसृष्टामिव पश्यतां अतएव स्वतेजोदर्शिनामविकृतावपि विकृतचेतसामाचार्यंमन्यानां तत्र तत्र दृग्दोषनिबन्धनामतिभेदास्समुपस्थास्यन्तीत्यपि सार्वजनीनमेतत्। तत्रापि विमर्शकाधिकारतारतम्येन केचन मनुमानवादिमानभेदेषु विवेकान्ध्येन तत्तदीयकलाकालकल्पपरिभ्रमणादिविमर्शगोचराः। केचन तत्रापि दुराग्रहेण जडग्राह्यस्य बाह्यजडस्य वा बहिर्वस्तुनो विमर्शगोचराश्चेतीयती गमनिका। मनुशब्दस्य मन्त्रतदर्थविमर्शैकबोधकत्वादिति। तत्र चिदचिन्मिथुनमेव कल्पः। तल्लक्षणं तु 'रोगैश्च क्षयितो देहः कल्प इत्यभिधीयते। तत्र तत्सूचनात्सूत्रं कल्पसूत्रं विदुर्बुधाः" इति भविष्योत्तरपुराणवचनम्। तत्र– 'आद्यचित्प्रसरमूर्तिरम्बिके" इति तृतीयविमर्शाद्यश्लोकवाक्यार्थेन। तत्रैव ब्रह्मविग्रहकलाधिरोहिणीत्यादिमहाकविसूक्त्या च, ब्राह्मः कल्पो नाम ब्रह्मविष्णुरुद्रेश्वरसदाशिवात्मरूपञ्चब्रह्ममूर्तिषु यथाधिकारं साधकाधिकारदशास्वन्यतमदशावती अन्यतमा मूर्तिरेव। तत्र चतुर्दशमनवः पूर्वोक्तविग्रहव्युत्पत्तिभेदेन मन्वन्तराणि वा प्रवृत्तिनिवृत्तिधर्मयोर्हेतुफलभेददृष्ट्या तत्सृष्ट्या च बीजकार्यमनुसहृदयोर्द्वैतरूपेण वा दृङ्मात्रकल्पितभेदेन हेतुफलयोराभासभेदचातुर्येण वा। मनुशब्दस्य मन्त्रमननार्थसाधारण्येन देहेन्द्रियसङ्घातसहभावितत्वाद्यथाधि-

कारं, यथायोगं च मनुमानवान्तरविभागो बोद्धव्यः। एवमेव तदीयायुःकलाकालकल्पेप्येकसप्ततिमहायुगमिते पौराणिकेपि कल्पे येन केनचिद्गणनामार्गेण मन्विन्द्रसप्तर्षिदिव्यपित्र्यप्राजापत्यब्राह्मान्तानि युगान्यपि व्यावहारिकेन सौरचान्द्रादिमासपञ्चकेन साकं यथायोगं बोध्यानि। सर्वेष्वपि मानवदिनादिब्राह्मदिनान्तं दिनकल्पगणनामाश्रित्यैव यथा कालमानं 'शतमानं भवति शतायुः पुरुषश्शतेन्द्रियः' इत्यादिश्रौतमायुःपरिमाणादि च। एवं स्थिते प्रकृते वागर्थषडध्वे तत्प्रकृतौ वा वैवस्वतमन्वन्तरीयेषु तदीयाष्टाविंशतितमकलियुगीयेषु वा ऽवतारपुरुषेषु कालिदासमहाकविचन्द्रकल्पीयाः मतभेदाः बहुधा वरीवर्तन्त इत्यलङ्कार एव तत्तदीयकलाकालविग्रहाकृतेः कृतादौ द्यूतेव वक्ष्यमाणलक्षणेन द्यूतकर्मणा विजितकृतायनामकदुरोदराणां विद्वद्वराणां कालिदासीयकर्मदशा तदीयकर्मविग्रहाधिरोहे तदीयाया एव स्वस्वप्रकृतेर्वा। नन्वास्तां तदीयकलाकालविग्रहमहाकृतेरधिरोहणम्। तत्तु 'येन खेलनसरोहणार्णवशश्वदाविशति येन मां शिवः' इति प्रबन्धान्ते स्वेनैवोद्घोषितम्। प्रकृतौ तदीयकर्मविग्रहकलाधिरोहस्य प्रकृतत्वात्तत्र प्रबन्धनामरूपयोर्वागर्थविग्रहव्युत्पत्त्या साकं तदीयनामरूपयोरपि तदैक्यप्रणाल्या विषयाद्यनुबन्धचतुष्टयनिर्णयेन साकं च प्रमेयमहार्थसारांशनिर्णयोपि क्रियतामिति चेत्तर्हि चिद्गगनशब्दार्थविग्रहस्वरूपनिर्णये विषये १ चिति गगनमिति वा २ चिदेव गगनं गगनमेव चिदित्यभेदसामानाधिकरण्येन वा ३ अथवा, चित् गगने यत्रेति जन्माद्युत्तरपदेन बहुव्रीहिमयेन वा। तथैव चन्द्रिकावागर्थविग्रहसम्बन्धविषयेपि १ चिद्गगने चन्द्रिकेत्याधिकरणकतत्पुरुषेण वा २ आहोस्वित्, चित् गगने यस्यास्सा चिद्गगना, सा च सा चन्द्रिकेति शाक्तेन कर्मधारयविग्रहेणेति वा ३ उताहो, पूर्ववत् चिद्गगनमेव चन्द्रिका चन्द्रिकेव चिद्गगनमित्यभेदप्रतिपत्तिर्वा, इत्येवंप्रकारकषड्विधविग्रहेषु विग्रहद्वयस्याभेदप्रतिपत्त्या विग्रहपञ्चकावशेषे, केनवा विग्रहेण? कथं वा विग्रहस्वरूपे महाकृतेः प्रकृतेर्वा तत्त्वनिर्णयः? कथं वा तत्सहायेन गह्वरविषयराजाद्यनुबन्धचतुष्टयस्य वा तत्त्वनिरूपणम्? इत्यादिप्रश्नराशेस्सदुत्तरतया महाकविचन्द्रेणैव गह्वरो विषयराजः, प्रबन्धात्मना, प्रबन्धो वा, विषयराजात्मना कारकाध्वविग्रहषट्कसामरस्येनैकयोक्त्या दिवाकरनिशाकरवह्निंपरिणमय्य प्रसाधनीकृत्य च प्रसादीकृत इत्येव प्रतिसमाधिरिति निर्वाच्यम्। तत्कथमिति चेत् 'आशीर्नमस्क्रिया वस्तुनिर्देशो

वापि तन्मुखम्' इत्युक्तप्रबन्धमुखलक्षणे आशीराद्यन्यतमेन साकमनुबन्धचतुष्टयस्य सूत्रणमेव खलु प्राचीनमहाकविसमयः। तदत्र षोडशीशब्दितमहावैसार्गिकीकल्पे तं पुरुषस्वरूपमेवेति 'क्षीरोद' मिति मङ्गलश्लोके वचसैव निरुक्तम्। तत्रान्तर्दशा हृदयोद्योगरूपं, बाह्यदशा तदुपयुक्तदिग्देशकालत्रिपुटीतत्त्वैकरूपं, यद्यपीदं द्वयं स्थूलदशां द्वेधाभेदेन स्फुरदपि विमर्शचतुराणां, सूक्ष्मदशां तच्चातुर्येण महापतिव्रतैकपत्नीव्रतस्थमहामानवं मिथुनमिवैकमेव श्रौतं वागर्थमिथुनं, स्वरूपएव सुसूक्ष्मवस्तुदाम्पत्यरूपं स्फुरतीति लोकवेदयोः जीवेश्वरौ, जगज्जीवौ, नरनारायणौ, पार्वतीपरमेश्वरौ, कालीकालौ, गुरुशिष्यौ विद्यादिश्रौतभारत्या स्वाविनाभूततत्तत्पर्यायनामभिः व्यावहारिकदशा कल्पनाचातुर्यपर्यन्तया स्वात्मधर्मप्रभेदकं, प्रबोधकं च यथाधिकारं क्रमाक्रमशब्दितेन वागर्थषडध्वक्रमेण षष्ठं, सप्तमं वा, प्रमातृप्रमाणांशद्वयानुबद्धमष्टमं चेत्प्रमेयांशेन साकं सप्रमेयत्रिपुटीकं नवमं, दशमं च वागर्थात्मकमेव मिथुनम्। एवं च पूर्वोक्तप्रबन्धनामनिरूपेपि त्रिपुटीद्वयात्मके, षड्विधशाब्दविग्रहपरिभाषया कारकाध्वषट्कसङ्केतितैष्षडङ्गषड्दर्शनादिभिः पर्यायनामभिः तत्तदभिधेयार्थषडध्वविग्रहपरिभाषया मनोबुद्ध्युतदशेन्द्रियचक्रे पुरुषस्वरूपे पुमर्थसम्पदि च त्रिचतुःपञ्चवाहवागर्थत्रिपुटीषु समष्टिव्यष्टिभ्यां वागर्थसन्तत्यां षड्द्वादशषोडशान्तेषु महाबिन्द्वेकरूपत्वात, तथा दिग्देशकालत्रिपुटीतत्त्वेपि सायनस्य वत्सरस्य मलमासस्य वा शिशिरवसन्तयोरन्यतरस्यार्तोश्च वा कलाकालवागर्थत्रिपुट्योस्समष्टिव्यष्टिभ्यां द्विभिन्नैकरूपत्वाच्च। तदेतत्त्रिपुटीद्वयं त्रयं वा प्राकृतं काव्यपुरुषमिथुनं, अन्यतरं वा मिथुनस्य तात्त्विकं तुरीयमेव रूपमिति च। तदुपेक्ष्योपास्यकोटौ, उपक्षिप्य वा उपासककोटौ, अवशिष्टत्रिपुटीपञ्चके द्विचतुःपञ्चवाहैकरूपे कलाकालप्रवर्तकमग्नीषोमसूर्यमण्डलत्रयसमष्टिव्यष्टिभ्यामपि तुरीयमहार्थसङ्केतितं स्वरूपमेवेति। शैवशाक्ततन्त्रागमादिपरिभाषया प्राणनादवागर्थसङ्केतेन च तुरीयतत्त्वरूपे तत्रैव पञ्चब्रह्मपञ्चवाहक्रमपर्यन्तः कृत्यपञ्चकव्यवहारश्च। तदत्रैवंभूतभौतिकदृग्विपर्यासशब्दितेन सृष्टिदृष्टिवादसिद्धान्तक्रमावलम्बेन शैवशाक्तादितन्त्रागमसम्प्रदायोपासकाः, पञ्चकोशदशमवलम्ब्याक्रममार्गेण प्रातिभासिकदृक्संहारशब्दितेन दृष्टिसृष्टिवादसिद्धान्तक्रमेण वैदिकोपासकाश्च, पारमार्थिकसद्वस्तुस्वरूपस्याशब्दत्वेन स्वरूपसत्तामेव पारमार्थिकं व्यावहारिकप्रातिभासिकसत्तयोर्विप-

रिवर्ल बहुधा(ऽ) न्यप्रपञ्चीकृत्य च स्वरूपमेव तत्त्वावबोधाय वर्णयामासुरिति। "अक्रमक्रमविमर्शलक्षणम्" इत्यादिना द्वितीयविमर्शे द्वितीयश्लोकेन कण्ठरवेण महाकविरेवासूत्रयत्। तदास्तां तावत्। प्रकृतौ पूर्वोक्तहृदयोद्योगवागर्थरूपयोः चिद्गगनचन्द्रिकाशब्दार्थयोष्षड्दर्शनेष्वन्यतमेन दर्शनेन विग्रहेण वाऽन्धगजन्यायेनापि स्वरूपसामरस्यावबोधाय वैदिक्या अन्तर्दृशा सच्चिदानन्दापरनामकं गुणत्रयमेवेति। वैषयिक्या तन्त्रागमादिसिद्धया च बहिर्दृशा तेजोवज्ञापरपर्याया प्रमात्रादित्रिपुटीति शाक्तशाम्भवाणवविसर्गत्रयापरपर्याया अग्नीषोमसूर्यधामत्रयत्रिपुटीति वा तुरीयस्वरूपतत्त्वस्यैव त्रिवृत्कृत्य निरूपणे कि भञ्ज्यालम्। तथाप्यस्याः कृतिप्रकृतेस्तन्त्रप्रबन्धरूपत्वेन तान्त्रिकी परिभाषैव तत्तदभिधेयार्थवर्णनायोपयुज्येत न वैदिकीति प्रायेण सैवाश्रीयते। वैदिक्यपि तत्तद्घटेषु तदुपासकलोकोपकाराय प्रासङ्गिकी निरूप्यत एवेति व्याख्यापरिपाटी। तदत्र तन्त्रपरिभाषया शाक्तविसर्गो नाम सृष्टिस्थितिसंहारानाख्याभासाख्यानुलोमकृत्यपञ्चके चरमस्य तिरोधानानुग्रहापरनामकानाख्याभासाख्यकृत्यमिथुनस्य व्युत्क्रमेण संहारस्थितिनामके कृत्यद्वये सृष्ट्यादिकृत्यत्रयमध्यकेन्द्रे वा महास्थितौ अन्तर्भाव्य, एवमनाख्याभासागर्भिते सृष्ट्यादिकृत्यत्रयेपि आद्यन्तस्थित्या क्रमाक्रमशब्दितं सृष्टिसंहाराख्यं व्युत्क्रमेण संहारसृष्टिशब्दितं वा कृत्यद्वयं कृत्याभासतया स्वात्मनो महास्थितौ चान्तर्भाव्य, तादृशकृत्यचतुष्टयगर्भितमहास्थितेश्शक्तिपूर्णतया पूर्णशक्तिरूपतया वा निरन्तरमिथुनीभूतप्रकृतिपुरुषात्मकशिवशक्तिमिथुनपूर्णस्वरूपाकांक्षितया उदयद्यौवनायां तस्यां महास्थितौ महाशक्त्यां वा 'दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि' 'करांगुलिनखोत्पन्ननारायणदशाकृतिः' इत्यादिश्रुतिस्मृतिप्रसिद्धे, षडङ्गपूर्णे, दशेन्द्रियदशोऽग्रेते त्रियावीर्यवंशोद्धारकचिदचित्समरसपुत्रोत्पत्तिद्वारेण स्वस्य स्वचक्रेश्च षडङ्गतापूर्णभावाय षडङ्गपूर्ण इव स्वयमप्यवाप्तशक्तितादात्म्यभावेन चित्प्रबोधैकलक्षणत्वादष्टादशश्शाक्तविसर्ग उच्यते। शाम्भवविसर्गस्तु आनन्दभूमिरात्मा खलु शम्भुशब्दाभिधेयभूतश्शाक्यार्थः। सच पूर्वोक्तसृष्ट्याद्यनुलोमत्रिचतुःपंचार्थकृत्येषु विज्ञानपूर्णतया तदीयबाह्यानन्दानुभवे तृप्तोप्यन्तर्मुखस्वशाक्तानन्देपि पूर्णानुभवतात्पर्येण बहिर्मुखतया चित्तावशिष्टानां नष्टार्थचतुष्कावभासादिनिर्विकल्पकमेयावभासान्तानां वक्ष्यमाणलक्षणानां वासनाबीजानां बीजांकुराणां वा संहारक्रियया आभ्यन्तरचिदग्निमूर्ध्नि स्वात्मशक्तौ

स्वयमेव होतृतया चित्तप्रलयैकलक्षणत्वात्सप्तदशश्शाम्भव इति व्यवह्रियते। अथाणवोपि विसर्गः स्वयमसम्पूर्णजीवाणुरूपेणार्थाणवबिन्दुरूपतयात्मविश्रान्तिमेवाविद्यकीं स्वरूपपूर्णतां वा कामयानः पूर्वोक्तमहास्थितिलाभपर्यन्तं शाक्तशाम्भवविसर्गयो रन्तराले प्रवेशनिवेशाभ्यां शाक्तविसर्गगर्भपातेन च पूर्णाक्षतामक्षपूर्णतां चापेक्षमाणः स्वयं तयैव विश्राम्यति नाहन्तयाऽनाहतविसर्गपूर्णयेति चित्तविश्रान्तिलक्षणोयं पञ्चदशष्षोडशो वा विसर्ग इति तन्त्रालोकतन्त्रसारलघुविवृत्त्यादिषु विसर्गत्रयलक्ष्यलक्षणसमन्वयो विस्तरेण द्रष्टव्यः। एतदेव विसर्गत्रयं लोकेऽपि वागर्थषडध्वे लिङ्गत्रयपरिभाषया स्त्रीपुंनपुंसकलिङ्गत्रयात्मना प्रथममध्यमोत्तमपुरुषत्रयात्मना च व्यवह्रियते। इत्येवमुक्तलक्षणोपेतं विसर्गत्रयमनुत्तराकृत्या वेदितुं यदि चर्मचक्षुषापि दिदृक्षेत्तर्हि मातृकास्वरखण्डान्ते शाक्तविसर्गदाम्पत्यं तैलसार्पिर्बिन्दुद्वयतुल्येनाग्नीषोमीयविसर्गात्मना, शाम्भवं च सौर्यं महासौम्यं वाऽद्वितीयपूर्णानुस्वारात्मना, आणवं चार्थीभूतमर्थानुस्वारार्थविसर्गानुत्तराकारादिस्थूलरेखाकारितं वर्णमयकुलशरीरेण च कौलानुत्तरसिद्धान्तमर्यादया त्रिकसिद्धान्तरहस्यवेदिभिः स्पन्दसिद्धान्तरहस्यवादिभि र्वा विमर्शकधौरेयैर्मातृकावागर्थपरिभाषासमन्वयसद्भावपूर्णभावाभ्यां गुरुमुखेन वा विविच्य ज्ञातव्यम्। लोकेऽपि मातृपितृपुत्रलक्षणैः कार्यशरीरैः सृष्ट्यादिकृत्यत्रयक्रियाशरीरैः धर्मादित्रिवर्गमहार्थशरीरैरग्नीषोमादिधामत्रयकारणशरीरैश्च विविच्य विज्ञाय द्वादशान्ते महाप्रमात्रादिपार्यन्तिकपञ्चदश्यां महाकारणत्रिपुट्यामन्ते षोडश्यां षोडशान्ते च यथाधिकारमुपासितव्यं च। अत्रायमाणवो विसर्ग एव वागर्थषडध्वे जीवसंसारे च साधकस्वरूपमित्यपि। शाक्तशाम्भवविसर्गद्वयं तु बिन्दुत्रयनिर्वाच्यं सत् सुव्यक्तशाक्तशाम्भवनादनवकभेदेन। मातृकायां स्वरखण्डान्ते चान्तर्बहिस्त्रिपुटीषडध्वयोर्ग्रथोपचरितव्यष्टिसमष्टिभ्यां द्वादशषोडशान्तनादवागर्थाक्षनवकान्तमुन्मनीमहानादबिन्दुपर्यन्तं पार्यन्तिकमिथुनभेदेन च यावन्महार्धसिध्यवधिकं साध्यरूपमेवेति च। स्फुटोच्चारणेन व्यक्तिदशायामपि नादवागर्थषडध्वात्मना कर्तृकारकादिक्रियाकार्यान्ताक्षमातृकासु भेदस्फुरणेप्याणवे वागर्थक्रमे व्यष्टिसमष्टिभ्यामग्नीषोमादिधामत्रयत्रिपुटीरूपेणापि कारणाभिन्नमेवेति सूचितपूर्वम्।

तत्राणवविसर्गो जीवं एवानुबन्धचतुष्टये मूलभूतोधिकारी। सच किञ्चिदाणवमलमात्रावशेषेण जन्मनि यत्र कालावयवे वा जननमरणप्रवाहे का-

लवेगेनोह्यमानश्शाक्तविसर्गगर्भे पतति । तदेव तस्य जीवसंसारे चरमं जन्म तदीयः कालनाशो वा । स च तदा प्रपञ्चपञ्चप्रेतासनासीनाया महाकालसङ्कर्षिणीपरदेवतायाः मन्त्रपादेषु प्रथमः "ब्रह्मणां ब्रह्मणस्पते" इत्यादि मान्त्रवर्णिकगाणापत्यवागर्थषडध्वरूपत्वादेव शक्तिपुत्रत्वेन व्यवहृतो गणेशावतारतया, शांभवविसर्गपतितश्चेत् षडाननशिवकुमारतया वा, कर्मभूमावेवतरति । इदमेव रहस्यम् । "शक्तिजन्मा गणेशः" इति ग्रन्थादौ मङ्गलश्लोकचरमपादेन, द्वितीयविमर्शे "यावदम्बपुरुषस्य शान्त" तेत्यादिना च रूपितं, तदत्र पूर्वोक्तनादवागर्थप्रमात्रादिशक्तिषु यस्याः कस्याश्चिद्वा शक्तेर्गर्भसमुद्रकाद्विश्वोत्तीर्णस्सन्नेव स्वातन्त्र्याद्भूमाववतरन् तृतीयविमर्शे "अक्षचक्रनिवहोर्कसङ्ख्यया" इत्येतत् श्लोके वक्ष्यमाणप्रकारेणान्तर्बहिरक्षार्थविषयगणानामीशितृतया गणेश इति व्यवह्रियते । इदमेवाधिकारिणः स्वरूपम् । एवं सम्बन्धोपि । उक्तगणेशावतारप्रभृति सादाशिवमन्त्रफलकपर्यन्तं पञ्चब्रह्मावतारेषु तत्तदवतारक्रमेणान्ततो महाकालीकालमिथुनतादात्म्येनभेदेनवा पञ्चवाहमहार्थक्रमापरपर्यायस्य साधकहृदयोद्योगस्यैव यथाधिकारं गह्वरविषयराजस्वरूपतया तस्य प्रबन्धेन साकं प्रतिपाद्यप्रतिपादकभावः, साधकेन साकं प्राप्यप्रापकभावश्च सम्बन्ध इति सम्बन्धविषययोः स्वरूपम् । तथा प्रयोजनं । साधकस्य मङ्गलश्लोके चरमपादसूचितशक्तिगर्भप्रवेशद्वारेण विष्णुरुद्रभावादिक्रमग्रासमुखेन च 'ईश्वरो बहिरुन्मेषो निमेषोन्तस्सदाशिवः' इति तन्त्रान्तरोक्तेश्वरभावस्यैकानेकजन्मानुभवक्रमेणवा, पञ्चमब्रह्मभावमप्यतीत्य 'चिल्लोचनेन सततं शिवमीक्षितु' मिति ग्रन्थादौ तुरीयश्लोकप्रतिज्ञातसमन्वयसद्भावपूर्णभावाभ्यामन्ततः परसदाशिवमिथुनस्वरूपापत्तिः । तया 'हृद्गुहामभिलषन्नहन्त' येति ग्रन्थादौ प्रतिज्ञातविरुद्धसख्यहानिश्च प्रयोजनमिति प्रयोजनस्वरूपनिरूपणंच । एवं ग्रन्थादौ श्लोकचतुष्टयेन, पञ्चकेन वा अनुबन्धचतुयं महाकविनैव सूत्रितम् । तत्स्वरूपविस्तरस्तु साधकस्य तन्त्रागमपरिभाषया मायीयकार्मणाणवापरनामकं मलत्रयं क्रमेण स्थूलसूक्ष्मकारणोपाधित्रयमाश्रित्य तदीयनैश्रेयसाभ्युदययोः प्रतिबन्धकमिव प्रमादालस्यादिदृग्दोषेण स्फुरणं तदीयजडप्रकृतेर्लक्षणम् । तस्याः भ्रान्त्येकशरीरत्वानुभवादिति ब्रूमः । तथाहि 'मायिकं नाम योषोत्थं मलं भेदावहं मतम् । वा, भेदप्रथामायीयं' इति लक्षणात्पांचभौतिकदेहादाविव बाह्येपि जगति स्वरूपेणासतो भेदस्य स्फुरणापादनं भ्रान्तिरेवेति बाह्यैर्माध्यमि-

कादिभिरप्यभ्युपेयते । तथा कार्मणमपि- 'शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः । न्याय्यं वा विपरीतं वा पंचैते तस्य हेतवः ॥ तत्रैवं सति कर्तारमात्मानं केवलं तु यः । पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः' इत्यादिभगवदुक्त्या यौगिकीं कर्तृतामात्मनि केवलासतीमध्यारोप्य "किमहगूं साधुनाकरवं ! किमहं पापमकरवमिति" इत्यादिना तैत्तिरीयब्रह्मवल्ल्युक्तशुभाशुभकर्तृताऽकर्तृताप्रयुक्ततापत्रयात्मकमिदमपि भ्रान्तेः प्रकारान्तरम् । एवमाणवमपि-'स्वातन्त्र्यहानिर्बोधस्य स्वातन्त्र्यस्याप्यबोधता । द्विधाणवं मलं प्रोक्तं स्वस्वरूपापहानितः' इत्युक्तद्विविधलिङ्गया भ्रान्त्या स्वरूपविभुत्वादिसम्पदो विस्मृतिरेवेतीदं त्रितयमपि भ्रान्तिरूपमेवेत्यत्र नविशयलेशोपि । तदेतत्त्रितये 'क्षीरोद' मित्यादिश्लोकत्रयक्रमेणैकैकश्लोकेनैकैकमाशीःपूर्वकं निरस्य तुरीये निर्मलज्ञाननेत्रेणेश्वरसादाशिवमिथुनरूपस्यात्मशिवस्य साक्षात्कारेण तच्चिकीर्षया वा संसारदावानलदग्धस्य तत्समन्वयसद्भावपूर्णभावाभ्यां विश्वोत्तीर्णतामयपूर्णानन्दानुभवाय स्वस्वचिद्गगनचन्द्रिकाप्रबन्धविमर्शस्यैव स्वविर्तीर्णस्य मुख्योपायतामावेद्य समष्टिप्रबन्धेन वर्णयितव्येषु नादवागर्थषडध्वभेदेषु सच्चिदानन्दत्रिपुटीसमष्टिरूपयोर्नादनाधनवकयोर्द्वितीयविमर्शे व्यावहारिकमातृमानमेयात्मकत्रिपुटीवर्णनेन तृतीये पारमार्थिकप्रमात्रादिमहात्रिपुटीवर्णनेन तुरीये च फलीभूतमहातुरीयत्रिपुट्याः चिन्मयनामरूपांशयोः स्वरूपे क्रमाक्रमशब्दितयोः सृष्टिसंहारक्रमयोः पर्यावर्तनेन च क्रमेणव्यावहारिकमातृप्रमाणत्रिपुटीशब्दिते क्रियाकार्याक्षनवकद्वयेऽपि विश्वोत्तीर्णयोः विश्वाभासचिन्मयप्रकृतिपुरुषयोरैक्यविमर्शेन सूत्रप्राये प्रथमविमर्शे "हृद्गुहामभिलष" न्नित्यादिभिरष्टादशभिः सूत्रात्मप्रायैस्सूत्रश्लोकैर्वर्णितस्वात्मैक्यसिद्धये स्वीयमहाकृतेरादिनाधापरपर्यायनाम्नस्सिद्धनाधभट्टारकस्य क्रमस्तुत्यपरपर्यायकृतेः पञ्चिकाख्यया विश्वरूपविवर्तप्रकृत्या व्याख्या रूपतानवोत्तरत्रिशततमे" "मुक्तमेव न मये" त्याकारके श्लोके कण्ठरवेणोद्घोषितेत्यनुबन्धचतुष्टयेन साकं सिद्धस्येव साधकस्यापि कालिदासस्य पूर्वोक्तषड्विधविग्रहैक्यं ज्ञानार्णवमहानयप्रकाशादिसूचितं षाड्वधषडध्वगुर्वौघक्रमैक्येन साकं शिष्यौघानुजिघृक्षया स्वानन्दानुबुभूषया च महाकविचन्द्रस्य वागर्थषडध्वप्रकृत्या वर्णितमिति सुधियो विभावयन्तु । तुरीये विमर्शे "त्वं नवार्णमनुचक्रविग्रहे" इत्येतस्मिन् श्लोकेचेदभेवैक्यं वितत्य व्याख्यातं तत्रैव द्रष्टव्यम् । इति प्रबन्धार्थप्रमेयत्रिसारांशश्चेति दिक् । इति निवेदयिता— ग्रन्थकृत् ॥

श्रीः ।

परदेवतायै नमः ।

# चिद्गगनचन्द्रिका ॥

करोपपदाग्निहोत्रशास्त्रिणा धनदानन्दनाथदीक्षानामशालिना, विरचितया 'दिव्यचकोरिकया' समलंकृता ॥

## प्रथमविमर्शः ।



### व्याख्योपक्रमश्लोकाः ॥

ओं नमः परानुत्तरसिद्धान्तविद्यासम्प्रदायप्रवर्तकेभ्यो वंशर्षिभ्यो नमः परौघादिभ्यो महद्भयो मुनिभ्यो नमो गुरुभ्यः । सर्वोपप्लवरहितः प्रज्ञानघनः पूर्णप्रत्यगर्थो ब्रह्मैवाहमस्मि ॥

स्वविमर्शमहास्फूर्तिपूर्तये गुरुमूर्तये,
नमो यद्दर्शने सर्वश्चित्रं न दृगपि स्फुरेत् ॥१॥
स्वरनादाविवान्योन्यसंपृक्तौ स्वोपलब्धये ।
सदानन्दस्वरूपौ तौ वन्दे(ऽ)कार(ल)युगात्मकौ ॥२॥
श्रीकामाक्ष्यानन्दनाथमिथुने प्रणतो(वो)स्मि किम् ।
यदनुग्रहतस्तन्त्रमार्गो मे गहनोऽस्फुरत् ॥३॥
आनन्दनाथापरदेक्षनामा कामाक्षिभामाहितपूर्णधामा ।
श्रीदेशिकेन्द्रोऽच्युतपूर्णसोमः(ष्टमवीररामः)षडध्वधामा पिहितस्वसीमा
पराप्रासादमारूढस्सौवर्णोपवने चरन् ।
मानसानन्दनारामो व्याकुर्वे कृतिमन्वहं (हमिमां कृतिम) ॥५॥
अत्रिवंशसमुद्भूतिरग्निमूर्तेर्द्विनामधृत् ।
एधीकुर्वन्नुपपदं दण्डक्रमसमुद्भवम् ॥६॥
परदृग्दोषशान्त्यर्थमिध्मवाहं कलेबरम् ।
गृहाख्यानेन्धनैर्गोत्रे दहन्नस्मि (स्ति)सुनिर्वृतः ॥७॥

आशायामुत्तरायां हि कुबेरोस्मि (स्ति) श्रतस्स्वयम् ।
धनदानन्दनाथेति गुरुमूर्तिप्रसादि(रि)तम ॥८॥
विद्याधनेऽन्वर्थपदं धृत्वा स्वां प्रेरितो बलात् ।
क्रियासिद्धिर्महीयं चेत्सत्या(त्वे)स्यादिति वि(नि:)श्वसन् ॥९॥
कालिदासकृतेः कुर्वे(र्याद्या)व्याख्यां दिव्यचकोरिकाम् ।
चद्रिकास्वादनान्मत्तामुन्मत्तां तद्रसादृते ॥१०॥
नमस्करोमि सततं कर्म किं तन्नकथ्यते ।
किं दम्पतिमिति ब्रूयामुताहो दम्पती इति ॥११॥
अर्थौचित्येपि शब्दस्यानौचित्याद्यादिमं न चेत् ।
शब्दौचित्येप्यनर्थस्वभावादेवान्तिमं न हि ॥१२॥
तस्मान्नमस्क्रियाकर्म कथितुं नैव शक्यते ।
तद्भावापत्तिरेवात्र तृतीया गतिरिष्यते ॥१३॥
तुर्ये तादात्म्यसंवित्तिः सा काले नोपलभ्यते ।
महानिवेदनं तत्र तुर्यातीतामिति स्मृतम् ॥१४॥
क्वाहमन्तर्म(हं मन्दम)तिर्बालः क महाकविवाग्झरी ।
तितीर्षु दुस्तरां तां मां नयेत्पारं गुरोः पदम ॥१५॥
क्षन्तुमर्हंति मे सन्तः साहसं(षोडशं)बालचापलम् ।
या जाता इल्योषधययो देवेभ्यस्त्रियुगं पुरा ॥१६॥
इल्योषधीशसूक्तादौ योगस्त्रैपुर ईरितः ।
परोक्षप्रियता चेति प्रत्यक्षद्वेषिता तथा ॥१७॥
वेदेष्वपिच देवेषु शब्दप्रथान्यजृम्भणात् ।
तदेव त्रिचतुःपञ्चवागर्थानां युगं मतम् ॥१८॥
तदेवानुत्तरे धाम्नि देशकालाध्वनोरपि ।
तद्रहस्यप्रकाशेन साधकानुजिघृक्षया ॥१९॥
कृता नु कृतिरत्रैषा षडध्वविवृतिच्छलात् ।
तदर्थविवृतौ साक्षात्प्रवृत्तापि प्रसङ्गतः ॥२०॥

वादजल्पकथाक्षुण्णा त्रयीषड्दर्शनेषु च ।
यथामति मदीयापि ताद्विवेके(का)कृतिर्भवेत् ॥२१॥
अत्र मामनुगृह्णातु येनास्मि किल चोदितः ।
कालिदासकवेर्नाम सूपालब्धेत्र दीर्धिका ॥२२॥
ह्स्वं मामवजानन्ती कलिदास्ये न्यमज्जयत् ।
त्र्यन्ते तत्र सूरीर्णस्रैविक्रमगिरं स्मरन् ॥२३॥
त्रिपाद्याच्नाछलात्पञ्चवाहतां बलिसम्पदम् ।
आरुह्य गुरवे देवराजायाऽदां गुरोः श्रियम् ॥२४॥
परिच्छदो ममह्यत्र भूचारी दण्डतः क्रमः ।
नाम(मूर्ति)माला वर्णमाला यस्यैश्वर्यमनन्तकम ॥२५॥
तदन्तस्थः स्वैरचारः स्वेच्छा(ऽऽ)चारनियन्त्रिता(शास्त्रनियन्त्रितः)
(त्रिरामविनियन्त्रितः)।
स्वभावस्तत्र मोक्षस्स्यादनुत्तरमहार्थवान् ॥२६॥
कल्यन्तसिद्धिमार्गेऽस्मिन्वैखरी पञ्चवाहता ।
एवं खण्डकथा यासौ कथा परिकथाऽस्तु मे ॥२७॥
कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः ।
द्वापरे शङ्खलिखिताः कलौ पाराशरा मताः ॥२८॥
कृतेतु रेणुका शक्तिः त्रेतायां जनकात्मजा ।
द्वापरे द्रौपदी शक्तिः कलौ शक्तिस्तु कालिकी(का) ॥२९॥
कल्यन्ते नास्ति तच्छास्त्रं शक्तिर्वा कालि(काल)विग्रहा ।
तस्मात्सर्वप्रयत्नेन कल्यन्ते कालिकीं यजेत् (कलिमुद्वहेत)॥३०॥
वैदिकं कालमिथुनं (वैदिकं मैथुनं काल(पाप)कलनाशमनं हि तत् ।
श्रुतं तद्वामदेव्येऽपि सामनीशमतं भवेत ॥३१॥
अन्यथा द्वादशान्तोक्तसन्ततेर्नाशसम्भवः ।
ज्ञानार्णवादुयुक्तदूतीयागयोगाविथौ स्मृतः ॥३२॥
गुरूणां पुष्पसङ्कोचक्रमोप्यत्र निदर्शनम ।

सोऽपि तत्रैव पटले षोडशे नियमाच्छ्रुतः ॥३३॥
तदे(सए)वेहापि नियतमनुबन्धचतुष्टये ।
यथाधिकारं विज्ञेयं नादवागर्थसन्ततौ ॥३४॥
श्रुतिपाठे क्रमजटाघनारोहावरोहवत् ।
त्रिषडध्वद्वादशान्तनियमो नादवर्त्मनि ॥३५॥
ऐन्द्रनीलमणिक्लृप्तविग्रहं क्लींकरांघ्रिकृतचिद्विशाखजम् ।
सौर्यसौम्यरसनेत्रदूषितं(कं)कालिकालयुगमूर्ति(मार्ति)दं शिरः ॥३६॥
अर्थैरलमलमिति शाब्दिकसुमनःस्रगुन्मनापाङ्गी ।
विन्दुत्रयरसचर्वणसम्भ्रमाविरुता चकास्तु भ्रमराम्बा(समरेम्बा)॥३७॥
मातृकाशाब्दविजये यो वागर्थैकनिष्ठितः ।
दिग्देशकालत्रिपुटीपरार्थैकप्रयोजनः ॥३८॥
शब्दब्रह्मसुनिष्पत्त्या परं ब्रह्माधिगच्छति ।
एवमेष महार्थोऽपि वागर्थैकषडध्ववान् ॥३९॥
प्रसृताभ्यन्तरज्योत्स्नः शरत्कालेन्दुमण्डलः ।
षट्त्रिंशता श्लोकजालैः संदब्धो विपुलक्रमः ॥४०॥
कुदेशिकमहाघर्मसंतप्तैस्सेव्यतां चिरम् ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥४१॥
तदिदं कर्म सहजमागन्तुकमिति द्विधा ।
सहजं शाब्दिकं कर्म जन्मना सह शब्दनात् ॥४२॥
आगन्तुकं त्वार्थिकं स्यात्तस्य चागन्तुकत्वतः ।
तत्र पूर्वतराऽधीना सिद्धिर्मानुषलौकिका ॥४३॥
शाब्दे ब्रह्मणि सिद्धिः स्याद्ब्राह्मी क्षात्री तु लौकिकी ।
वैश्यानामर्थसिद्धिर्हि गतिरेषा सनातनी ॥४४॥
कृतावस्थां प्रमेयादिसूचिनी सुविमृश्यताम् ।
महाप्रमातृतामात्रविमर्शैकनिबन्धनः ॥४५॥
सूत्रप्रायेत्र पुरतः त्रिचतुःपञ्चवाहकैः ।

महाक्रमैर्गर्भितस्तु संक्षेपेणात्र सूत्रितः ॥४६॥
द्वितीये शाक्तविज्ञानक्रियासंसृतिगर्भितः ।
प्रमाता व्यवहारोपयुक्तनादैकविश्रमः ॥४७॥
विचारितस्तृतीये तु मातृकागर्भनिष्ठितः ।
वागर्थैकषडध्वेऽस्य त्रिचतुःपञ्चकृत्यके ॥४८॥
धामसंविद्वर्णगणक्रमप्रामाण्यजृम्भणात् ।
मूलहृत्फालकबिलद्वादशान्तैकविश्रमात् ॥४९॥
पीठश्मशानमेलापक्षेत्रयागक्रमास्थितौ ।
धाममुद्रावर्णकलासंविद्भावस्वभावतः ॥५०॥
पातानिकेतदृष्ट्या(सृ)ष्ट्याच बृन्दचक्रप्रकाशनात् ।
विसर्गत्रिततयस्याक्षमालाविर्भावहेतुकः ॥५१॥
अन्तर्निरिंधनज्योतिर्बहिर्मूर्त्यष्टकात्मवान् ।
मूर्त्यानन्दप्रकाशेषु बृन्दचक्राहमक्षवान् ॥५२॥
ज्ञानक्रियोपासनासु सकलासु व्यवस्थितेः ।
प्रमाणाहंभावयुक्तः शाम्भवोऽत्र विवेचितः ॥५३॥
तुरीये तु तुरीयाहमक्षमत्रावलम्बनः ।
महाप्रमात्रहंभावे स्वरूपे विनिवर्तितः ॥५४॥
महाप्रमेयाहमक्षविचारो विपुलक्रमः ।
लेलिताखि(कु)लविश्वाहमक्षक्रमविदीपनात् ॥५५॥
विश्वतादात्म्यतस्सर्वाविश्वोत्तीर्णस्वभाववान् ।
क्रमाणां वैपरीत्येन शाक्तशाम्भवसर्गयोः ॥५६॥
गुप्तिसम्भाषितजगत्सर्वस्वात्मविजृम्भणात् ।
कुलाकुलानुसन्धानसामरस्यस्वभावतः ॥५७॥
महाकौ(का)लस्वधर्मेण द्वादशान्तैकविश्रमात् ।
महाप्रकाशचिच्चन्द्रश्चिद्विमर्शप्रकाशकः ॥५८॥
नवाकाशविकासेन नादवर्णक्रमैक्यतः ।
महाप्रमेयाहमक्षक्रमः पीठे विचारितः ॥५९॥

वाङ्मयोऽयं महादूतीयागश्शाम्भवनायकः ।
साङ्गोपाङ्गो महाहन्ताहवनान्त इहेरितः ॥६०॥
अनुत्तरमहासम्पदधिकार्यत्र पूज्यते ।
महाप्रमेयाहमक्षसाधकैः सुविमृश्य(श्य,ताम् ॥६१॥
अनुत्तरमहाकारपश्चार्थैः कृत्यपञ्चके ।
आर्थिकोऽपि महायागः स्वाधिकारानुरूपतः ॥६२॥
अर्थिभिः सतु सम्पाद्यस्स्वानर्थविनिवारकः (णे) ।
तत्रानर्थोत्पादहेतुः स्वदृग्वैलक्ष्यमेवहि ॥६३॥
एवमर्थानर्थसाम्ये येषां निर्दुष्टमंतरम् ।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥६४॥
न प्रहृष्येत्प्रियं प्राप्येत्यादिगीतानुशासनम् ।
पार्थायोपदिदेशात्र भगवान्देवकीसुतः ॥६५॥
सर्ववेदान्तसिद्धान्तसारोऽयं हृदयं महत् ।
अनुत्तरमहासंवित्सिद्धान्तोऽत्रापि (त्रैव) दृश्यताम् ॥६६॥
अथाप्यनुत्तरे धाम्नि गीताचार्यानुशासनात्
प्रत्यभिज्ञापनादुद्दुष्टप्रवृत्तेर्दुःखहेतुता ॥६७॥
पराप्रासादनादोऽयं वागर्थैकमहाक्षवान् ।
जन्ममूलाधारहेतुः पञ्चाशद्देशभाषितैः ॥६८॥
अनुत्तरमहामूर्तिष्षडध्वे पञ्चवाहके ।
महाप्राणस्पंदरूपष्षडध्वैकैकलक्षणः ॥६९॥
पञ्चवाहस्वभावेन शाक्तोऽन्यो नाद उत्तरः ।
उत्तमश्च महाप्राणनादो (घो) न्यश्शाम्भवोपि सः ॥७०॥
इति विरचितमाराज्ञादवागर्थकृत्यैः
प्रकटितपरमार्थैर्ज्ञानविज्ञानगर्भैः ।
प्रतियजनविधानैष्षड्विधैक्येन युक्तैः
प्रणवपरमदेव्याः तृप्तिमापादयेन्नः (द्वः) ॥७१॥

श्लोकप्रमेयसूची तु वाक्यैरत्र विलिख्यते ।
साप्यत्रोपकरोत्वेषा भुवनेऽपि विलोक्यताम् ॥७२॥
नादवागर्थतत्त्वस्य व्याख्याने मार्गशोधनम् ।
अतत्त्वविदुषामत्र स्वाज्ञानस्य विजृम्भणम् ॥७३॥
इदं हि शास्त्रमाहात्म्यदर्शनालसचेतसाम् ।
अपभाषणवद्भाति नच सौभाग्यमुज्झति ॥७.॥
मन्विन्द्रादेरिवैकैककालमाने युगक्रमे ।
श्लोकानामेकसप्तत्या युगसङ्ख्यापि रूपिता ॥७५॥
कलावागार्थतत्त्वेपि युगसङ्ख्याप्रमाणतः ।
स षडध्वे ब्रह्मकल्पे मनुसङ्ख्यावबुद्ध्यताम् ॥७६॥
एवं कलाकालयोगे युगप्रस्तार इष्यताम् ।
वास्तुतद्वर्षखण्डादेरेकाशीतिपदावधि ॥७७॥
परार्थावधिकापीह सङ्ख्या वागर्थशंसिनी ।
अर्बुदायेत्यादिमन्त्रे स्वाहान्तेन सुयोजिता ॥७८॥
प्रकरणेह्यश्वमेधेत्र वाग्वार्बुदमितीरणात् ।
न्यर्बुदायेत्यादिके तु स्वाहांतेन तथा पुनः ॥७९॥
योवै वचो यद्भूमास्यात्तन्यर्बुदमितीरितम् ।
तस्मात्तदुभयाधीना मन्त्रसिद्धिर्हि लौकिकी ॥८०॥
मातृकाया लौकिकीस्याद्वारिवस्या सतां मुदे ।
इत्ययं मातृकावास्तुमण्डपो विश्वभावनः ॥८१॥

इह खलु परमकारुणिकः कविकुलतिलकः कालिदासनामा महाकविरविशेषेण मन्दमध्यमादि सकलभक्तजनोद्दिधीर्षया प्रतीकाद्युपासनाभेदेषु धाम संविद्वर्णक्रमत्रयोपेतवक्ष्यमाणलक्षणप्रकाशानन्दमूर्तिनामभिन्नविविधवृन्दचक्रोपासनायां देवतानान्तरीयकं "अन्तर्बहिः पूरुषकालरूपं" इति श्रीमद्भागवते भगवदुक्तिप्रकारेणांतर्दहरात्मना वहिःकालरूपेण चराचरस-

कलजगन्नियामकं, कलधात्वर्थकालशिवशक्त्याः स्वाभिन्नमहाकालीपञ्चवाहमहार्थक्रमाख्यमनुत्तरसिद्धांततत्त्वरूपं, "हंत! रहस्यं भणामो मा भ्रमत गर्भगोलेषु । अत्यासन्नं हृदयं पर्यालोचयत तस्य चोद्योगं" इति महार्थमञ्जरीपरिमलोक्तलक्षणहृदयोद्योगरूपं चिद्गगनचंद्रिकाप्रबंधमिषेण काव्यमर्यादया प्रकटयितुकामस्तत्र वक्ष्यमाणलक्षणपरदेवतापीठमञ्चपादेषु शिष्यौघादिमहापरौघांतेषु गुर्वौघेषु वा प्रथममञ्चपादगुर्वौघादिरूपं "वासनामात्रलाभे पि यो ऽ प्रमत्तो न जायते । तमनित्येषु भोगेषु योजयंति विनायकाः" इति महार्थमञ्जरीपरिमलोक्तिप्रकारेण निर्विघ्नसिद्ध्यौपयिकाऽप्रमादहेतुतया सत्सम्प्रदायपरम्परागतप्रथमस्पंदाख्यया पुर्यष्टकाधिनेतृगणेशतत्त्वतया च प्रथमाराध्यं, "ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ" इत्युक्तप्रकारेण ब्रह्मग्रंथिविभेदकमहाप्रणववागर्थषड्ध्वैकशुण्डं, शक्तिपुत्रं, महागजाधिराजाननमाधिकारिकमङ्गलमूर्तिमनुबंधचतुष्टयसूचकं स्वानुभवदिदर्शयिषया साभिप्रायविशेषणैरादौ ग्रंथतो निवध्नाति—

क्षीरोदं पौर्णमासीशशधर इव यः प्रस्फुरन्निस्तरंगं
चिद्व्योमस्फारनादं रुचिविसरलसद्बिन्दुवक्त्रोर्मिमालम् ।
आद्यस्पन्दस्वरूपः प्रथयति सकृदोंकारशुण्डः क्रियादृक्
दन्त्यास्योऽयं हठाद्वः शमयतु दुरितं शक्तिजन्मा गणेशः ॥१॥

क्षीरोदमित्यादि ॥ अत्रादावेव यद्यपि "शुभदो मो भूमिमयः" इत्युक्तछंदोगणलक्षणानुसारेण भूदेवताकमगणस्य मङ्गलकरत्वेन गणशुद्धावपि कषयोर्योगात्मककूटार्णक्षकारप्रयोगाभिसंधिना यौगिकी वर्णशुद्धि र्न विवक्षितेति द्योतितम् । तथापि जडजाग्रद्दशाप्रकृतिवाचकेषु कादिमावसानकस्पर्शवर्णेषु कादिमावसानकप्रत्याहारसिद्धस्य पाशुकजीवगतस्थूलकामपुरुषार्थवाचकत्वेन तं विहाय, शषसहानामूष्मवर्णानां क्रमेण चित्प्रकृतितादात्म्यापन्नशुद्धविद्येशसादाशिवपराशिवमिथुनावसानकतया पराशिवमिथुन-

गतान्तर्मुखहृदयोद्योगतत्त्वचतुष्टयस्य पञ्चकस्य वा वाचकत्वेन शक्तिजन्मेति गणेशविशेषणाग्रगतशाक्तविसर्गविलासस्य, तद्गर्भपतिताणवविसर्गविलासस्य वा, निदिध्यासयिषितप्रथमस्पन्दात्मकगणेशतत्त्वशिवकुमारस्य कूटार्णबोध्यत्वविवक्षां मनसि निधाय जाग्रद्दशादिस्पर्शबोधकस्यावस्पर्शाक्षरस्य ककारस्य, तुरीयदशातत्त्वबोधकेषूष्मवर्णेषु द्वितीयवर्णपरामर्शस्येश. वाचकस्य षकारस्य च प्रत्याहारेणान्तर्मुखे हृद्व्योम्नि कषणक्रियाप्रातिपदिकवागर्थप्रतीतेः तदुभयपिण्डीभूतक्षकारेणेशजागृतिवाचकेनप्रवृत्तिनिवृत्त्यु. भयदशासामरस्यात्मकमेव पुर्यष्टकाधिनेतृगणेशतत्त्वमिति सूचयति । तदुक्तं मातृकाचक्रविवेके तुर्यखण्डे — "आत्मा पशुः प्रकृतिरेव तया निगीर्णो ह्यात्मापि चित्प्रकृतिरेव निवृत्तिरूपा । इत्थं द्विधा प्रकृतिविक्रमभूः क्षकारः शम्भुः परः परत एव भवेत्प्रकृत्याः" 'यद्वा शिवः क्ष इह मप्रतियोगिभावात्सौ. षुप्तमेव परशम्भुपदं चिदात्मा । यच्चक्रमध्यपरता तदधीशता च शम्भोः तदस्य गुणगन्धितयार्च्यभावात् ॥' इति च । निस्तरङ्गं क्षीरोदं पौर्णमासीशशधर इव प्रस्फुरन्नाद्यस्पन्दस्वरूपो यो गणेशः निस्तरङ्गं चिद्व्योम सकृदेव प्रथयति । स्वात्मानुभवस्य सकृद्विभातरूपत्वात्सकृत्प्रथनमितिभावः । एतेन पुर्यष्टकाधिनेतृगणेशस्य पौर्णमासीशशधरसाम्यवर्णनेन चन्द्रस्यावि. नाशिसादाकलापर्यंतवृद्धिक्षयाविव गणेशस्यापि पुर्यष्टकावयवपञ्चदशकलानां वृद्धिक्षयसद्भावेपि चन्द्रवदेव नामकलापर्यंततयैव वृद्धिक्षयावित्यपि सूचितम् । यद्वा, उपासकानां युष्माकं दुरितं मायीयभेदप्रथारूपं सकृदेकप्रयत्नेन शमयत्विति वा सकृत्पदस्यान्वयः । स्फारनादरुचिविसरादिविशेषणे देहळी. दीपन्यायेन क्षीरोदपक्षेपि योज्ये । क्षीरोदमिति । क्षकारमेरुवर्णषडध्व. रूपमीरयतीति क्षीरं दहराकाशः । यद्वा, क्षरतीन्द्रियवृत्तिभ्य इति वा । तदुदयतेऽत्रेति वा उदीयतेऽस्मादिति वा क्षीरोदमिति चिद्व्योम्नो विशेष. णम् । तच्चादौ क्षारोदमपि पश्चात्क्षीरोदमिति रहस्यं । क्षीरोदधिश्चेति विशे. ष्यता च । उभयथापि हृदयोद्योगबोधकं पदमित्यर्थः । आद्यस्पन्दस्वरूपइति । सृष्टिक्रमे आदावनुत्तराकारादावस्पन्दस्वरूपो वागर्थयो रचलस्वरूपः । संहा. रक्रमे त्वाद्येऽक्षप्रत्याहारे स्पन्दस्वरूपश्च । अक्षस्पन्दस्यैव संहारक्रमारम्भत्वादिदं

गणेशविशेषणम् । तदारुचीनां विसरेण लसन्तो बिन्दवो वक्त्रेषु यासा- मूर्मिमालानां ता ऊर्मिमाला यस्मिन्तमिति विग्रहः । चिद्व्योमपक्षे तु, रुचिविसरलसद्बिन्दवो वाङ्माधुर्यरसानुसन्धानेन तदीयशब्दार्थालङ्कारादिरसानुसन्धानेन वा प्रकाशमानतालुरसास्यब्रह्मविदवः शब्दोच्चारणकालिकाः मुखे- यासूर्मिमालासु वाग्व्यापारपरम्परासु तादृग्वाक्परम्परा यस्मिंश्चिद्व्योम्नि विम- र्शमयदहराकाशे तदिति विग्रहः । यद्वा, अन्तः स्फारनादमपि बहिर्वैख- रीरूपेण रुचिविसरलसद्बिन्दुवक्त्रोर्मिषु मालं वक्ष्यमाणलक्षणाणवादिमलत्रये- किञ्चिन्मलशेषेणारोपितेन वाऽनुबद्धविग्रहमिति वाऽर्थभेदेनान्वयभेदः ।

ॐकारशुण्ड', क्रियादृक्, दन्त्यास्यः, शक्तिजन्मेति चत्वारि गणेश- विशेषणानि । तत्रोंकारवाच्यं शाब्दं पुरुषतत्त्वमेव शुण्डा यस्य स ओंका- रशुण्डः । तथाच श्रुतिः—'आत्मनमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्यानिर्मथनाभ्यासात्पाशं दहति पण्डितः,, इति । अत एव क्रियादृक्,दन्त्यास्य,शक्तिजन्मेति विशेषणत्रयेण ज्ञानेच्छाक्रियामयकार्यब्रह्मरूपतापि सूचिता । तत्रापि क्रियादृगिति बहिर्मुखक्रियामात्रविमर्शेन दन्त्यास्य इति तदीयफलबुभुक्षात्मकेच्छाद्योतकयौवनावस्थासंपन्नमुखविशेषणेन, शक्तिजन्मेति क्रियामयशरीरजन्मभूमिद्योतकेन च—"कार्यं विष्णुः क्रिया ब्रह्मा कारणं तु महेश्वरः,, इति ब्रह्मवैवर्तोक्तत्रिमूर्तिमयत्वमपि सूचितम् । पूर्णोपमालङ्कारः । स्रग्धरावृत्तं । तल्लक्षणं तु—"म्रभ्नैर्यानां त्रयीणां त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ,, इति ॥१॥

एवं सधकानां मायीयमलनिरासफलकगणेशस्तुतिरूपमङ्गलानन्तरं चिकीर्षितचिद्गगनचन्द्रिकास्तोत्रौपयिककार्मणमलनिरासहेतुक माकारशरीरं शिवतत्त्वमपि परामृशति—

स्थूलं सूक्ष्मं परं च त्रिविधमिह जगद्यत्प्रथावेशसिद्ध्या
युक्तं सत्ता यदीया स्फुरति च परतः स्वप्रथैकस्वभावा ।
भामूर्तिं यं विमर्शाक्रियमनुपतिता लक्ष्यते लोकवृत्तिः
सन्मार्गालोकनाय व्यपनयतु स वः तामसीं वृत्तिमीशः ॥२॥

स्थूलमिति । स्थूलसूक्ष्मपरनामकं व्यावहारिकप्रातिभासिकपारमार्थिकस-

तात्रयाश्रयं, वागर्थनादात्मकं तद्रूपं वा स्थूलं वैखरीरूपं। सूक्ष्मं मध्यमारूपं। परं पश्यन्तीवासनामयं च। त्रिविधमपि जगत्। गच्छतीति जगदिति व्युत्पत्त्या सिंहादिगणपाठसिद्धवर्णव्यत्यासेन वर्णागमेन वा त्रिविधजीवशक्तिरूपमित्यर्थः। यस्य परशिवस्य। प्रथावेशसिद्धया पृथूभावापरपर्यायव्याप्तिसिद्धया युक्तं सदेव स्फुरति। तस्मादेव नाममात्रभेदस्फुरणहेतोः, स्वप्रथैकस्वभावा स्वीयमुख्यव्याप्तिस्वभावा। यदीया यत्परशिवात्मवस्तुसम्बन्धिनी सत्ता च परतः भेदेनेव वर्तमानाज्जगतः सकाशाच्च स्फुरति। एतेन स्वसिद्धयधीनसिद्धिमत्स्वरूपान्योन्याश्रयोऽलङ्करोऽस्माकमभेदवादिनां न दोषावहो भेदवादिनामेवेत्यपि सूचितम्। तेन च भेदसृष्टिः प्रातिभासिकशाब्दशरीरमात्रेत्यपि व्याख्यातप्राया। तथा विमर्शमात्रमेव क्रिया यस्य तं भामूर्तिं प्रकाशमात्रविग्रहं। तथा च श्रुतिः—"न तत्र सूर्यो भाती' त्याद्या। तथाविधं यमनु अनुसृत्य। लोकवृत्तिः लोकस्य वर्तनमपि। जीविकापीत्यर्थः। लक्ष्यते। स ईशः वः साधकानां युष्माकं। सन्मार्गालोकनाय—सन्मार्गः परमार्थसत्तासाक्षात्कारमार्गः। मृग्यते मार्ग इति वा, मृग्यते वस्त्वनेन मार्ग इति वा, क्रमेण स्वरूपं तत्साक्षात्कारमार्गो वा यथाधिकारमर्थो वेदितव्यः। तस्यालोकनाय साक्षात्काराय। तामसीं वृत्तिं शुभाशुभानुष्ठानकार्मणमलरूपां, स्वरूपावगमाय कर्मणःसाधनत्वभ्रांतिरूपां वा व्यपनयतु। 'उपायैर्न शिवो भाति भान्त्यमी तत्प्रसादतः। ईश्वरानुग्रहादेव पुंसामद्वैतवासना ॥', इत्यादिनाऽनपायस्थितेरनुपायस्थितेर्वाऽज्ञाननाशस्येश्वरानुग्रहफलत्वोक्तेरिति भावः। भूताकाशपक्षे—सतां नक्षत्राणां मार्गः तस्यालोकनाय। तामसीं वृत्तिं तमिस्रारात्रिगतान्धतमोव्यापारं, मेघावरणादिरूपां वा स दिक्कालाकाशमयशरीरक ईशो नाशयत्विति। एतेन तार्किकाणां मते तमसो द्रव्यत्वमिव, वेदान्तिनां मते मिथ्याऽज्ञानस्यापि द्रव्यत्वं, वस्तुत्वं वा निरस्तमिति वेदितव्यम्। आवृततेजसस्तमस्त्वमित्रावृतज्ञानरूपस्यैव मिथ्याऽज्ञानत्वव्यवहारात्। तमिस्रारात्रिष्वाकाशप्रकाशेनैव नक्षत्रस्फूर्तेरनुभूयमानत्वाच्चेति भावः ॥२॥

एवं शिवतत्त्वं परामृश्य श्लेषविधया, पाठभेदेन च स्वस्य साधकानां च विद्याऽविद्यास्वरूपानन्दसाम्राज्यसंहर्तृतयाऽसम्पूर्णशाम्भवविसर्गरूपाणवमलापकरणं प्रार्थयन्स्वस्य कृतेश्च नामनी अपि दर्शयति—

इह कालिदासचन्द्रप्रसूतिरानन्दिनी स्तुतिव्या (र्व्या)जात् ।
चिद्गगनचन्द्रिकाब्धेः शमयतु संसारदावदवथुं वः (नः) ॥३॥

इहेत्यादिना । इहास्मिन् चिकीर्षितप्रबन्धे कालिदासनामा यश्चन्द्रस्सएव प्रसूतिरुत्पत्तिस्थानं यस्याः स्तुतेस्सा तथोक्ता । आनन्दिनी चिद्गगनचन्द्रिकानाम स्तुतिः छन्दःपादादिनियमबद्धवागर्थव्यापाररूपा बाह्या वा आभ्यन्तरा वागर्थकृतिः । अब्धेर्व्याजात् भ्रान्तसंसाराब्धिमिषादित्यर्थः । वः नः पाठकानां युष्माकं कर्तुर्मम च । संसारदावदवथुं संसारानलसन्तापं किञ्चिद्ज्ञत्वाणवमलप्रयुक्ततापत्रयात्मकमित्यर्थः । स्फुरन्तमिति शेषः । शमयतु नायं संसाराब्धिः किन्त्वानन्दाब्धिरेवेति शाङ्करमार्गस्वरूपज्ञानदानेनानन्दयत्वित्याशयः । स्तुतिव्याजादिति पाठे स्तुतिमिषादित्यर्थः । स्तुतिरित्यपह्नवमात्रं विमृश्यमाने नेयं स्तुतिः किन्त्वनुत्तरस्वरूपपरत्वेन चिद्गगनस्थचन्द्रिकैवेति भावः । अत एवानन्दिनी सत्यब्धेरिव संसारदावदवथुं वः युष्माकं, नः अस्माकं च किञ्चिद्ज्ञाणवमलरूपं बाडवानलतापं शमयत्वित्यन्वयः । गगनचन्द्रिकाऽब्धिं वर्धयित्वैव तदीयवाडबसन्तापं यथा शमयति इयं चिद्गगनचन्द्रिकापि वक्ष्यमाणपदपदार्थसमन्वयसंसारं वर्धयित्वैव तदीयदावदवथुं शमयत्वित्याशीरिति भावः । कृतिपक्षे कालीति संबुद्धिः । हेकालि!दासचन्द्रप्रसूतिःतवाविनाशिसादाख्यपुरुषचन्द्रकलास्वरूपतयायं परिदृश्यमानगगनस्थ व्यावहारिकश्चन्द्रः त्वच्छेषत्वेन दासभूत एव । तत्प्रसूतिश्चन्द्रिकाऽऽनन्दिनी यथा त्वद्दासी इयमपि चिद्गगनचन्द्रिका तथैवानन्दिनी सती शाङ्करमार्गप्रदानेन दासभूतानां नः मम, साधकानां चाणवमलात्मकसंसारानलसन्तापं शमयत्वित्यन्वयः ।

तदुक्तं महार्थमञ्जरीपरिमले— श्लो ।। "दुःखान्यपि सुखायन्ते विषमप्यमृ-तायते । मोक्षायते च संसारो यत्र मार्गः स शाङ्करः" इति ।। यद्वा, इहास्मिन्वेदशास्त्रादिविद्याप्रपञ्चे चिद्गगनचन्द्रिकाब्धेः समुद्रतुल्यचिद्गगनच-न्द्रिकाख्यप्रबन्धात । प्रबन्धस्य सृष्ट्यादिभासान्तकृत्यपञ्चकाभिन्नदेवतरु-पञ्चकपञ्चरत्नाद्याकरत्वेन समुद्रसाम्यमिति भावः । कालिदासचन्द्रप्रसू-तिः कालिदासनामककविचन्द्रप्रभवेति श्लिष्टरूपकम् । चित् कृत्यपञ्च-काभिन्नदेवतर्वादिस्वरूपयाथात्म्यचिद्वृत्तिः । गगनचन्द्रिकेवानन्दिनी स-तीति पदावृत्त्या स्तुतिव्याजात स्तुतिव्यापारमिषात् । वः युष्माकं श्रोतॄणां, नः अस्माकं पठकानां च संसारदावदवथुं आविद्यकसंसारानल-सन्तापं शमयत्वितिवान्वयः । अस्मिन्पक्षे पाठकोक्तिरिति ज्ञेया । अत्र पूर्वतरश्लोकद्वये व इति पाठेन, श्लोकेत्वस्मिन् वः न इति पाठभेदेनच साधकानां यथाधिकारमाणवादिमलत्रितयस्य, द्वितयस्य वाऽनुवृत्त्या स्वस्य विनष्टप्रायाणवमलमात्रानुवृत्त्या च साधकानां यथाधिकरं विज्ञानाकलप्र-लयाकलसकलनिष्कलाख्यचतुर्विधाधिकारभेदः, स्वस्य निष्कलोपास्त्यधिका-रभेदश्च तेन स्वकृतौ सस्त्रीकचातुर्वर्ण्याधिकारिकता निषादपंचमपञ्चजना-धिकारिकता वा स्वस्य महाकालीकालशिवमिथुनावतारता च सूक्ष्मेक्षिकया सूचितेति मङ्गलश्लोकत्रितयरहस्यम् ॥३॥

तथोक्तचतुर्विधसाधकोपासकान्प्रति "हन्त! रहस्यं भणामो मा भ्रमत गर्भगोलेषु । अत्यासन्नं हृदयं पर्यालोचयत तस्य चोद्योगम्" इति महार्थ-मञ्जरीपरिमलोक्तप्रकारेण साधकहृदयोद्योगरूपां स्वचिकीर्षितग्रन्थसन्दर्भ-स्तुतिं "सरितामिवप्रवाहास्तुच्छाः प्रथमं यथोत्तरं विपुलाः । ये शास्त्र-समारम्भा भवन्ति लोकस्य ते वन्द्याः" इत्युक्तकाव्यमीमांसानयेन प्रथमं सूत्रप्रायतया यथोत्तरवैपुल्येन च वर्तनाद्यथाधिकारं विमर्शकफलप्रदां च स्ववाक्त्रिपुटीप्रमेयतृतीयचिद्गगनचन्द्रिकां तुरीयचिद्गगनचन्द्रिकामिव सवि-मर्शमुपासितुं श्लेषमर्यादयात्मानमेवाऽऽदर्शत्वेन दर्शयन्विधत्ते—

चि [त्व]ल्लोचनेन सततं शिवमीक्षितुमन्वये च सद्भावम् ।
लब्धुंच पूर्णभावं यदि चेतस्समुपाध्व (ध्य) मिमाम् ॥४॥

चिल्लोचनेनेति ॥ चिदेव लोचनं नेत्रं ज्ञाननेत्रमित्यर्थः। तेन सततं शिवमीक्षितुम्। त्वल्लोचनेनेति पाठे साधकस्य तव लोचनेनेत्यर्थः। अविच्छिन्नतैलधारावदपरोक्षवृत्त्या साक्षात्कर्तुम्। अन्वये सद्भावं पूर्णभावं च लब्धुम्। अस्य ग्रन्थसन्दर्भस्य सरलमार्गेणात्माभिन्नपरशिवतात्पर्यैकपदपदार्थसमन्वयं, तद्द्वारेणात्मनः पूर्णभावं च प्राप्तुमित्यर्थः। यदि चेतः सम्प्रवृत्तमिति शेषः। तर्हीमां स्तुतिं समुपाध्वं सम्यक्तात्पर्यनिर्णयेन विमृशध्वम्। इति विधौ प्रार्थनायां वा लोट्। स्वपक्षे चिल्लोचनेन ज्ञाननेत्रेण। त्वल्लोचनेनेति पाठे युष्मत्प्रत्ययार्थतत्त्वज्ञानमेव लोचनमस्मत्प्रत्ययार्थस्वस्वरूपतत्त्वावेदकं तृतीयनेत्रं तेनेत्यर्थः। सततं शिवमीक्षितुं प्रकृतिविविक्तात्मशिवमपरोक्षयितुम्। अनु–अये– च– सद्भावमिति छेदः। तमेव युष्मत्प्रत्ययार्थलोचनमस्मत्प्रत्ययात्मशिवं वा अनु– अनुसृत्य पूर्णभावं लब्धुं च। चकारोत्र व्यवहारसद्भावपूर्णभावयोरपि समुच्चायकः। सद्भावं अये अयं कालिदासस्सत्पुरुषः पूर्णश्चेति सार्वजनीनव्यावहारिकसत्त्वभावमपि प्राप्तवानस्मि। यूयमपि तादृशसद्भावं प्राप्नुयेत्यर्थादाक्षिप्यते। ज्ञाननेत्रेण शिवसाक्षात्काराय तद्द्वारेण पूर्णभावापत्तयेच सत्यपि विद्याधनादौ च तदीयपूर्णभावे सत्पुरुषोयमिति व्यावहारिकसद्भावापत्तिरपि सर्वेषामावश्यकीति भावः। तत्सूचितं विद्याकर्मादिसाधनेन द्विनामसम्पत्सम्पादनबोधके ब्राह्मणोपनिषदादिवाक्यजाते 'तस्माद्द्विनामा ब्राह्मणोर्थुकः'' इति। "स गुरुमेवाभिगच्छेत्समित्पाणिः" तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" इत्यादिके। यद्वा व्यावहारिकप्रातिभासिकसत्ताद्वयत्यागपूर्वकं त्रिकालाबाध्यचेतनरूपोहमिति पारमार्थिकसद्भावं प्राप्तवानस्मि। यूयमपि तथा प्राप्नुथेति वा यथाधिकारमर्थाक्षेपो बोद्धव्यः। यदि सार्वजनीनसद्भावावाप्त्या पारमार्थिकसद्भावापत्त्यापि वा न पूर्णभावापत्तिसाक्षात्कारलाभः। तर्हीमां चिद्गगनचन्द्रिकामपि स्वीयचित्तविलासरूपतया सम्यगुपाध्वमित्याह— यदीति। यदीमां चिद्गगनचन्द्रिकां— चेत इति। स्वीयचे-

तोविलास एव चिद्गगनचन्द्रिकास्तुतिरूपेण कविनिबद्ध इत्युपाद्ध्वम् । तर्हि त्वच्छोचनेन शिवसाक्षात्कारं तेन पूर्णभावं च प्राप्स्यथेति भावः। चेतस्समुपाद्यमिति पाठे शिवमीक्षितुं पूर्णभावं च लब्धुं यदि प्रवृत्तिस्त. र्हीमां स्तुतिमनुचेतस्समुपाद्यम्। स्तुतिविमर्शनक्षमं चित्तं सम्पादनीयमि. त्यर्थः। यद्वा 'अद भक्षणे' इति धातोरदनीयमलत्रयोपाधिरूपमात्मानं इमां च स्तुतिं समुप सम्यगुपकुरुध्वमिति वा । विमर्शमयज्ञाननेत्रेण जातेऽपि प्रकृतिविविक्तात्मसाक्षात्कारे चिद्गगनचन्द्रिकाविमर्शजन्यहृदयशान्तिं विना औपनिषदपुरुषस्वरूपसाक्षात्कारालाभेन सार्वात्म्यापत्यपरपर्यायपूर्णभावापत्ति. स्तु ततोपि दूरतरत्वान्न लभ्यत इति रहस्यार्थः ॥४॥

एवमनुबन्धचतुष्टयात्मकश्लोकचतुष्टयोपोद्धातेन मलत्रयानुबद्धमुख्यत्रि-विधाधिकारसम्पदमुपवर्ण्य तच्छोधकमहाविराड्गायत्र्यर्थमेकद्वित्रिचतुःपञ्च. पाच्छक्तिरूपं "पृथिवी पादः । अन्तरिक्षं पादः। द्यौः पादः। दिशःपा-दः । परोरजाः पादः । विराड्येव प्रतितिष्ठति" इति तैत्तिरीयश्रुत्युक्त-विराट्प्रतिष्ठाफलप्रापकं, पञ्चार्थक्रमापरपर्यायमहाकालीपञ्चवाहक्रमतया परमस्थूलरूपेण परिणतसखीकचातुर्वर्ण्यरूपं; निषादपञ्चमपंचजनमानव. जीवशक्तीनां त्रिवर्गचतुर्वर्गपंचवर्गात्मके त्रिविधमहापुरुषार्थक्रमे प्रथमचतु. र्थपंचमपुरुषार्थसामरस्यात्मकामुष्मिकबुद्धिमैहिकत्वदृष्ट्या भावविकारेषु द्वि. तीयतृतीययोरिव द्वितीयतृतीयार्थकामपुरुषार्थयुगलस्यामुष्मिकत्वदृष्ट्या च विपरिवर्तनमप्युपजीव्योपास्तिक्रमे पुरुषार्थपंचके पंचपाद्विभूतिविस्तारेण षष्ठादिनवान्तसाङ्ख्यक्रमेपि षट्सप्तसङ्ख्ययोरन्तर्बहिस्सामरस्योपास्तिभेदेन ष. डृतुषण्मुखसप्तमनु ग्रहद्वीपसमुद्रादितत्तद्वासनानुकूलकल्पितभ्रामर्यादिशाक्तस. म्पद्रूपाणां तथा त्रिवर्गचतुःपंचवर्गव्यष्टिसमष्टिभेदोपास्तितरतमभावेन सप्ता. ष्टमातृकानवनाथनवयोनिकालशैवचक्रादिरूपाणां च नादसङ्ख्यानां शैवशा. क्तभागयोर्ज्ञानक्रिययोर्नामरूपांशयोश्च जाग्रदादितुरीयातीतान्तमानवावस्थाऽ-परपर्यायपंचब्रह्मकृत्यपंचकेन सह सृष्टिस्थितिसंहारानाख्याभासाख्यकाली. पंचकाभेदसमन्वयं सर्वतोमुखेन वितत्य व्याचिकीर्षुः पूर्वोक्तपृथिव्यादिप.

रोरजोन्तगायत्रीपादेषु यथाक्रमं (१) अहङ्कार (२) प्राण (३) मनः (४)बुद्धि (५) इन्द्रियैः प्रतीचीनगत्या नियम्यत्वे सर्वदा श्रुतिगोचरात्मसम्पदभिवृद्ध्या "बृहि बृंहि वृद्धौ" इत्येवं शब्दनिरुक्तात्मसम्पद्बृंहणेनान्वर्थकं ब्रह्मत्वम् । क्षतात्त्राणनात्मकं क्षत्रत्वम् । धर्मधर्मिवेशस्थित्याऽऽत्मानात्मसम्पद्वेशस्थित्या वा वैश्यत्वम्, चेत्येवंरूपत्रैवर्णिकापरपर्याये वैदिकसच्चिदानन्दात्मकज्ञानक्रियामयत्रयीमुख्यशाब्दशरीरत्वे "रोगैश्च क्षयितो देहः कल्प इत्यभिधीयते। तत्सूचनेन तस्यापि कल्पसूत्रत्वमिष्यते" इत्यादिभविष्योत्तरपुराणनिरुक्त्या भौतिकाभौतिकशब्दार्थसामरस्येन त्रयीमयमुख्यवेदशरीरककालीकालपरशिवमिथुनकल्परूपत्वं, वैदिकषडध्वापरपर्यायषडङ्गशब्दशरीरत्वे, शीक्षाव्याकरणछन्दोरूपेण शाब्दाध्वत्रिकप्रधानं, वेदाङ्गशाब्दज्ञानशरीरकं, कालकालीमिथुनज्ञानत्रिपुटीरूपं, निरुक्तज्योतिःकल्पात्मकार्थाध्वत्रिकप्रधानं, कलातत्त्वभुवनरूपं, क्रियात्रिपुटीमयं, मुख्यवेदाङ्गशरीरमेवेति, मुख्यं, त्रिविधं वेदवेदाङ्गत्रैवर्णिकनवचक्रात्मकं, श्रीचक्रं मुख्यवेदाधिकारिकं सिद्धचक्रं। अनधिकारिकन्तु व्युत्क्रमेण पूर्वोक्तपंचसङ्ख्याकविराड्गायत्रीपादैरहङ्कारादीन्द्रियान्तात्मावयवेषु पराचीनगत्या नियम्यत्वे विराड्रूपकार्यब्रह्ममात्रस्थित्या, सत्यपि "ब्राह्मणो बृहस्पतिसवेन यजेत, राजा राजसूयेन, वैश्यो वैश्यस्तोमेन, वर्षासु रथकारोग्नीनादधीत, एतया निषादस्थपतिं याजयेत्" इत्यादिश्रुत्युक्तवैदिकक्रियामात्राधिकारे वेदतात्पर्याविषयकत्वेनाविद्यकवैखरीक्रियामात्रपरत्वात् "स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा। इति भारतमाख्यानं कृपया मुनिना कृतम्" इत्युक्तनाममात्रधारित्रैवर्णिकत्वरूपंसाधकक्रम् । तावत्सम्पन्मर्यादाया अप्यभावे तत्तत्सङ्कीर्णवृत्त्युपलक्षितपंचजनतादिरूपं, वक्ष्यमाणशिष्यौघलक्षणानुगत्या साध्यश्रीचक्ररूपं, जागतं बृन्दचक्रपीठंचेति, त्रिवृत्त्रिणवमहाविराट्सम्पदं, पूर्वोक्तस्वराड्गायत्रीसम्पत्सामरस्येन "दश हस्त्या अंगुलयो दश पद्या आत्मैकविंशः। द्वादशमासाः पंचर्तवस्त्रय इमे लोका असावादित्यएकविंशः" इति श्रुत्युक्तकालपुरुषसम्पत्सामरस्याभेदेन भारतपंचमवेदसमन्वयमार्गेण च क्रीम्, क्रूम्, स्फ्रेम्, हसौः ॰ ०̥ , स्हौः ०̥ ॰, हस्ख्फ्रेम्,

इत्यादिकालीप्रासादपराप्रासादादिपञ्चसप्तनवादिसङ्ख्याकबीजपिण्डमन्त्रादिभिः पञ्चाम्नायसारभूतमहाकालीकालमिथुनचिज्जडमयनादनवकविभूतिसामरस्यमेव सकलागमतन्त्रशास्त्रप्रमेयमिति चिद्गगनचन्द्रिकास्तुत्याऽन्याकृतपीठोत्पत्त्यादिकाल्युपासनाक्रमरहस्यात्मकं, वैदिकावैदिकसाधकहृदयोद्योगरूपात्मदृगुन्मेषमनुजिघृक्षुरादौ स्वस्य दृक्क्रियामयशरीरतां, महाकालीकालमिथुनात्मकार्धनारीशरीरस्य तदतीतपदत्वं चोपदर्शयन् "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो ऽभिचाकशीति" इति मन्त्रोक्तविरुद्धसख्यहानिफललाभाय महानादमयपूर्णाहन्तया हृद्गुहाभिलाषवर्णनपूर्वकं स्वस्य तदनुप्रवेशेन प्रमातृपूर्णभावं च दर्शयन् "स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा" इत्युक्तस्त्रीशूद्रादित्रय्यामनुग्रहेण सकलतन्त्रागमपुराणेतिहासादिप्रमेयभूतमहाकुलधर्मरूपं, भारतं स्वकुलधर्मं, महाविराड्गायत्र्यर्थत्वेनैवाभिनीयापि दर्शयन्तं, महाकौलिकमर्धनारीश्वरं शब्दार्थोभयशरीरेण स्वयमप्यनुविशति—

हृद्गुहामभिलषन्नहन्तया
दृक्क्रियावपुरदृक्क्रियापदम् ।
सन्तमे [नो] भि समभावदं [गिनं]शिवं
सख्यहानिरमुना हि सूयते ॥५॥

हृद्गुहामित्यादिना । अहन्तया ममतास्पदगौणाहन्तां, प्रादेशिकात्ममिथ्याहन्तां च विहाय मुख्यया । मातृकाप्रत्याहारेणाहंशब्दनादत्रिपुटीवृत्तिरूपया, "त्रिवृद्वै ज्यैष्ठ्यं । माता पिता पुत्र." इत्यादिश्रुत्युक्तसर्वज्यैष्ठपित्रहमर्थरूपया, उक्तशब्दार्थसामरस्यात्मकानाहतनादपूर्णभावरूपया चेत्येवं त्रिविधयाप्यहन्तयेत्यर्थः । हृद्गुहां । 'गुहूसंवरणे' इति धातोः संवृतसमष्टिशब्दार्थहृदयगुहामित्यर्थः । अभिलषन् आभिमुख्येन शब्दार्थहृदयगुहामिच्छन् । दृक्क्रियावपुः । दृक्क्रिये उप्यतेऽस्मिन्निति, अनेनेति वा व्युत्पत्त्या बहिर्मुखावस्थायां वृत्तिमयज्ञानक्रियाशरीरोहम् ।

अदृक्क्रियापदं वृत्तिमयज्ञानक्रियाभ्यामपद्यरूपम् । कर्तृकर्मक्रियामयत्रिपुटीरहितमित्यर्थः । अनुत्तराकारविषयकदृक्क्रियाभ्यां पद्यरूपं च । वागर्थशरीरत्वादित्यपि ध्वन्यते । अतएव नादबिन्दुकलामयमहानादरूपं चेत्यनुरणनमर्यादया । सन्तं पारमार्थिकसद्रूपम् । यद्वा, अहं हृद्गुहामभिलषन् । तया हृद्गुहयैव । दृक्क्रियावपुः, अदृक्क्रियापदं सन्तमिति वा । अतएव समभावदम् । शिवं मङ्गलरूपम् । "ब्रह्म वेद ब्रह्मैव भवति । ब्रह्मैव सन्ब्रह्माप्येति । ब्रह्म तन्मङ्गलं परम्" इत्यादिश्रुतेः । 'वश् कान्तौ' इति धातोरिच्छारूपं चेत्यप्यर्थः । यथाधिकारं, यथेच्छं च सारूप्यादिप्रदातारमिति भावः । सन्तं शिवमित्यन्यतरविशेषणविवक्षया सादाख्यपुरुषचन्द्रकलारूपं शिवं चेतिवाऽर्थः । एमि प्राप्नोमि । अनुविशामीत्यर्थः । यद्वा, समीचीनोऽभावः समभावः । अधिकरणात्मको भावान्तररूपोवा । तं ददातीति समभावदम् । तार्किकाभ्युपगतसप्तमपदार्थरूपाभावस्यासमीचीनत्वद्योतनार्थमत्राभावस्य समित्युपसर्गविशेषणसार्थक्यमुन्नेयम् । तदुक्तं वार्तिके— "भावान्तरमभावस्तु कयाचित्तु व्यपेक्षया" इति । भट्टपादैरप्युक्तम्— "अधिकरणात्मको ऽभावः" इति । सन्तनोमि समभावदंगिनमिति पाठे–दृक्क्रियाभ्यामपद्यरूपमपि समानस्फुरणवन्तम् । अतएवाङ्गिनमात्मानं सम्यक्तनोमि विस्तारयामि । वितत्य विधिमुखबोधाय सृष्ट्यादितटस्थलक्षणद्वारेण वर्णयामीत्यर्थः ।

नन्वीदृशात्मविस्तृतिशिवभावापत्तिरूपानुप्रवेशस्य किं फलमित्याशङ्क्य विरुद्धसख्यहानिं फलत्वेन दर्शयति— सख्यहानिरिति । हि यस्मात् । अमुना शिवेन सख्यहानिः द्वासुपर्णेति श्रुत्युक्त विरुद्धसख्यस्य हानिः । प्रसूयते दीयतइत्यर्थः । द्वयोरहमो रैक्यं लभ्यत इति भावः । अतस्तं एमीति फलोपन्यासः । तेनाद्वितीयात्माभेदसाक्षात्कारावस्थायां, तादृशाहंग्रहोपासनावस्थायां च, स्वस्वरूपतया, विशिष्टाद्वैतभेदावस्थायां शेषतया, सेव्यसेवकभावरूपद्वैतप्रतीकोपासना-

वस्थायां सेवकतया च, आविधकसह्यहानेस्समत्वान्मतत्रयेऽपि सह्यहा-
निफलं सममिति वेदितव्यम् ।

यद्वा 'हन् हिंसागत्योः' इति धातुपाठात्सह्यहानिर्विद्याप्रयुक्तसह्य-
गतिर्दीयत इति वा, उपासकपक्षे- विद्यार्थिनां वैषयिकाणां वा मते
समन्वयो वेदितव्यः । तेन प्रकृते स एव शिवः कृतिकर्ता नाहमि-
त्याशयः । तदुक्तं मन्त्ररामायणकारैः— "विश्वोत्पत्तिविपत्तिभूस्स भ-
गवानत्र प्रवक्ता शिवस्तस्याहं प्रतिशब्दपर्वतगुहा यन्मे न गर्वग्रहः ।
तद्दोषोऽस्तु गुणोऽस्तु वा न खलु तत्स्वायत्तमित्थं स्थिते मात्सर्यं महता
मुदेतु यदि वा वात्सल्यमुज्जृम्भताम् ॥" इति । अत्र सर्वत्र रथोद्धतावृ-
त्तम् । लक्षणन्तु— "रो नराविह रथोद्धता लगौ" इति । एवं वृत्त-
रचनामिषेणापि "आत्मानं रथिनं विद्धि शरीरं रथमेव च" इत्युक्तप्रत्य-
क्शिवविराड्देहस्य चिद्गगनचन्द्रिकाख्यप्रबन्धात्मना उद्धतरथवृत्तस्य वागर्थ-
विलासमयत्वप्रत्यभिज्ञाज्ञापनेन च स्वशरीरतादात्म्यं सूचितमिति संक्षेपः ॥५॥

एवमात्मनः परशिवतत्त्वानुप्रवेशेन पूर्णभावभरितस्य परशिवस्य प्र-
काशविमर्शोभयात्मकत्वापरपर्यायवागर्थाद्यात्मकार्धनारीश्वररूपतां सूचयन् ,
"नमो वाचे या चोदिता या चानुदिता तस्यै वाचे........पितरोऽनुमदन्तु"
इति शुक्लीयकाण्डशान्तिमन्त्रोक्तस्वस्वरूपवाच उदितानुदितदशाभेदेनात्रि-
कलोकव्यवहारसिद्धवैखरीपरावागर्थदृष्टिभेदं च विपर्यासयन् , उदितानु-
दितवागर्थाभिन्नविधामयपरावैखरीवागर्थभावेन वक्ष्यमाणद्वित्रिचतुःपञ्चार्था-
नुत्तरपञ्चवाहमहार्थक्रमोपयोगितया वागर्थमयषडध्वसृष्ट्यादिहेतुतां प्र-
तिजानीते—

याऽहमित्युदितवाक्परा च सा
यः प्रकाशलुलितात्मविग्रहः ।
यौ मिथस्समुदिताविदोन्मुखौ
तौ षडध्वपितरौ श्रये शिवौ ॥६॥

याऽहमित्यादिना । या वाक् । अहमिति । मातृकार्णप्र-

त्याहारविमर्शेनाभ्यन्तरक्रियाशक्तिमयोऽहंशब्द इति । उदितवाक् । उदितं सञ्जातोदयमात्मानं वक्तीति उदितवाक् । भवति, सैव परे. ति सम्बन्धः । तद्वत्, यः अहमर्थोपि । प्रकाशलुलितात्मविग्रहः । प्रकाशेन शब्दाभिन्नार्थस्फुरणेन । अहंशब्दप्रयोक्त्रभिन्नेनेति यावत् । तदुक्तमुपदेशसाहस्रयां शङ्करभगवत्पूज्यपादैः— "सम्भाव्यो गोचरे श. ब्दः प्रत्ययो वा न चान्यथा । न सम्भाव्यौ तदात्मत्वादहंकर्तुस्तथै. व च ॥" इति । लुलितः शब्दानुप्रविष्टः आत्मविग्रहः स्वस्वरूपविशेष. ज्ञानं यस्य सः । सोपि परएवेति लिङ्गपरिणामोवा शेषोवा । य. त्तदोर्नित्यसम्बन्धात्, पराचेत्यत्र चकारार्थसमुच्चयस्वारस्याच्च' ॥

ननु तर्ह्युभयोरपि परत्वे द्वैतापत्तेस्स्वसिद्धान्तव्याहतिः प्रसज्येते. त्याशङ्कय वक्ष्यमाणवागर्थसृष्ट्यादिषडध्वक्लृप्तपञ्चकृत्योपयोगितया "परस्प- रतपस्सम्पत्फलायितपरस्परौ । प्रपञ्चमातापितरौ प्राञ्चौ जायापती स्तुमः॥" इत्युक्तपरस्परानुप्रविष्टवागर्थयुगलात्मकत्वद्योतनाय गजवृषभचित्रन्यायेन भे- दनिर्देशवर्णनं वाचोयुक्तिमात्रमिति परिहरति— यौ मिथ इति । यौ वा. गर्थरूपौ मिथस्समुदितौ उक्तप्रकारेण परस्परानुप्रविष्टस्वरूपौ सन्ताविव । इह पूर्वश्लोकोक्ताविधकसख्यहानिरूपविलासार्थभुवनसृष्टौ । उन्मुखौ आवि. धकवागर्थयोर्लिङ्गादिवागर्थविधिनिषेधव्यापारोपयुज्यमानलिङ्गादिकल्पनाक्रम. त्यागेन "न पद्माङ्का न वज्राङ्का न चक्राङ्का यतः प्रजा । लिङ्गाङ्का च भगाङ्का च तस्मान्माहेश्वरी प्रजा ॥" इत्युक्तसहजाविमृश्यवागर्थलिङ्गा- दिस्फुरणपाण्डित्येन चोर्ध्वमुखौ । अतएव षडध्वपितरौ । वर्ण. पदमन्त्रमयविमृश्यशाब्दाध्वत्रयात्मना, माता । 'माङ् माने' इति धातोः। मात्यपरिच्छिन्नं स्वरूपं परिच्छिनत्तीति माता । स्वस्वरूपपरिच्छेत्री, स्व- रूपप्रमाता शिवश्च । कलातत्त्वभुवनमयप्रकाशनीयार्थगताऽर्थाध्वत्रया- त्मना पाति पालयति स्वरूपयाथात्म्यमिति पिता । स्वरूपपा. लकशिवः पालयत्री शक्तिश्च । एवं माता च, पिता च पितरौ । षडध्वपितरौ । शिवौ । शिवा च शिवश्च शिवौ । 'वश् कान्तौ' इति धातोः परस्परवाच्यवाचकानुकूलेच्छास्वरूपौ । नामांशपरिच्छेदपालनाभ्यां रू-

पांशपरिपालनपरिच्छेदाभ्यां च सकलजगत्प्रसूतिरक्षादिदक्षौ कालीकालौ श्रये । स्वस्वरूपाभेदेनाहं कलये इत्यर्थः । पराक्प्रतीचोः कालीकालयोर्दिग्देशकालाध्वषट्कस्वाभाव्यं स्वात्मन्येव साक्षादनुभवामीति भावः। तदेतदध्वषट्कमेवमुक्तं सौभाग्यहृदयामर्शस्तवे— "वर्णः कला पदं तत्त्वं मन्त्रो भुवनमेव च । इत्यध्वषट्कं देवेशि! भाति त्वयि चिदात्मनि॥" इति । एतेन तत्त्वमसीति महावाक्यगतशब्दार्थपरोक्षापरोक्षानुभूतावपि यथा वागर्थसृष्टौ वर्णशब्दार्थभूतब्राह्मणादिचातुर्वर्ण्यमूर्तिमूलपरिज्ञानमात्रमेवाविद्यकप्रमेयत्वंपदार्थज्ञानवत्कलामात्रमेव भवति, तादृग्वर्णादिकल्पनाहेतुकस्वस्ववर्णधर्मपरिज्ञानं पद्यते स्वरूपतत्त्वमनेनेति व्युत्पत्त्या परोक्षवर्तितत्पदार्थज्ञानवत् पदम्, तादृशपरोक्षतत्पदार्थभूतस्वस्वरूपधर्मानुभवतादात्म्यज्ञानद्वारेणैव पदसमुच्चयमहावाक्यार्थशाब्दबोधात्मकं सकलभुवनस्वरूपतादात्म्यफलकमसिपदार्थविश्रान्ताभेदस्वरूपात्मकसकलवेदशास्त्रादितात्पर्यार्थफलज्ञानं यथा स्वरूपाभिन्नं; तथैवैतच्छास्त्रमर्यादयापि नादबिन्दुकलामयाक्षरार्थज्ञानापरपर्यायकलाज्ञानद्वारेणैवाक्षरसमुदायात्मकपदार्थतत्त्वज्ञानं, तादृक्पदर्थतत्त्वज्ञानद्वारेणैव पदसमुदायात्मकवाक्यार्थापरपर्यायमन्त्रार्थभूतभुवनस्वरूपतादात्म्यज्ञानमपीति वेदितव्यम् । उक्तं च कारिकावल्याम्— "पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः । शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥" इति । एतेन "शब्दा वर्णात्मका नित्याश्च । मन्त्राणामनन्यादृशं सामर्थ्यम्" इत्यादिपरशुरामकल्पसूत्रेषु त्रैपुरसिद्धान्तोक्तसूत्रार्थस्तात्पर्येणानूदित इत्यपि वेदितव्यम् ।

ननु किमिदं विरुद्धमुच्यते, यतोत्र शब्दबुद्धिकर्मणां द्विक्षणावस्थायितया तृतीयक्षणनाशः तार्किकैरभ्युपगम्यते । भगवता परशुरामेण तु वर्णात्मकानां शब्दानां नित्यता चेति कथमुपपद्यत इति चेदिह तदुभयाभ्युपगतनित्यानित्यत्वविरोधाभासयोर्वक्ष्यमाणसृष्ट्यादिलक्षणकृत्यत्रये, पञ्चके वा तत्तन्मातृकाक्षरार्णवकल्पावसानकक्षणलक्षितत्वेन सापेक्षत्वादविरोध इति ब्रूमः । तदुक्तं वेदान्तपञ्चदश्यां श्रीविद्यार-

ण्यगुरुसार्वभौमै:— "उपादाने विनष्टेपि क्षणं कार्यं प्रतीक्षते । इत्याहुस्तार्किका: तद्वदस्माकं किं न सम्भवेत् ॥ तन्तूनां दिनसङ्ख्यानां तैस्तादृक्क्षण ईरित: । भ्रमस्यासङ्ख्यकल्पस्य योग्य: क्षण इहेष्यताम्" इत्यादिना ॥ ६ ॥

एवं प्रमातृवागर्थमयात्मन: प्रमाणपदे 'प्रमेयस्य स्वरूपत्वप्रकाशोहि प्रमातृता । प्रमाणनां विमर्शश्चेत्यर्थनारीशताऽऽत्मन: ॥" इत्युक्तप्रमातृप्रमाणसामरस्यापरपर्यायप्रकाशविमर्शमयतां विभाव्य, धूमार्चिर्मार्गाधिकारिप्रमेयविमर्शकस्य जीवसाधकरुद्रस्यापि तदवाप्तये तस्य प्रमेयवागर्थाभिन्नरूपत्वेन "द्रव्ययज्ञा: तपोयज्ञा:" इत्यादिना भगवद्गीतोक्तसप्तविधयज्ञेषु द्रव्ययज्ञस्यैवाऽहन्ताविद्याऽविद्ययो: स्वरूपेपि वा कृत्यत्रयशिरोरूपेण प्रथमसाधनतां द्योतयन्, वैदिकसोमयागविशेषेषु—"रुद्रो वा एष यदग्नि:" इति श्रुत्युक्तोष्णवीर्यशिरस्सन्धानात्मकप्रवर्ग्यादे: "अहरह: प्रवृज्यते । अर्धमासेऽर्धमासे प्रवृज्यते" इत्यादिश्रुत्युक्ततत्स्थानापन्नाग्निहोत्रदर्शपूर्णमासादेश्च यथा नित्यत्वेन प्रामुख्यं, तथा तान्त्रिकयागविशेषेष्वपि शीतवीर्यरुद्रशिरस्सन्धानात्मकपञ्चपदार्थकरणकपूजाविशेषस्य प्रामुख्यमभिद्योतयितुं प्रमेयजीवरुद्रस्य महामन्थानभैरवस्य प्रमाणपदस्थपांचभौतिकदेहेन्द्रियादिसङ्घातं जीवयात्रामयसृष्ट्यादिपञ्चकृत्यसमुद्रमथनोपयोगिमन्थदण्डतया प्रमात्रभेदेन स्तुवन्नमस्करोति—

**शक्तिनेत्रपरिणद्ध (द्ध) मास्थितं**
**पूर्णभामय [वम] पयोधिमन्थ (न्थ) ताम् ।**
**देवि! तर्पणसुधाकलाश्रयं**
**रुद्रमन्दरमहं स्फुटं भजे ॥७॥**

शक्तिनेत्रेत्यादिना । हेदेवि! प्रकाशविमर्शात्मिके । शक्तिनेत्रपरिणद्धं । विद्याकृत्यपंचकपक्षे— शक्तिरेव नेत्रं लोचनं तेन परिणद्धम् । आविद्यककृत्यत्रयपक्षे— शक्तिनेता शक्ते: नायक आत्मा तेनाऽपरिणद्धं ।

स्वरूपपक्षे— शक्तिरेव नेत्रः मन्थरज्जुः तेन परिणद्धं । पूर्णभामयपयोधिमन्थतां । पूर्णभामयः पूर्णप्रकाशमयः । यः पयोधिस्तस्मिन्मन्थताम् । मन्दरतां मन्थदण्डतां च । आस्थितम् । शक्तिनेत्रपरिणद्धमास्थितमिति पाठे— शक्तिनेत्रं नेत्रसदृशी शक्तिः परिणीयतेऽनेनेति शक्तिनेत्रपरिणदिति क्विप्प्रत्ययान्तविवक्षायां नेत्रसदृशशक्तिपरिणेता दहराकाशः । तं वमति प्रसारयतीति शक्तिनेत्रपरिणद्धमः । सर्वशक्तिप्रसारकपांचभौतिकदेहेन्द्रियसंघातः । तमास्थितं शक्तिनेत्रपरिणद्धमास्थितम् । सकलशक्तिसमेतदेहेन्द्रियादियुक्तमित्यर्थः । पूर्णभावमपयोधिमथ्नतामिति पाठे— अपयोधिमथ्नताम् । विदितवेदितव्यतयाऽकारनामस्वरसमुद्रम् । "अ इत्यष्टादशानां संज्ञा" इति शब्दानुशासनमर्यादयाऽकारात्मकमूलाधारस्थस्वरमातृकाकुण्डलिनीमात्रविमर्शेन मन्थानभैरवरूपाणां सिद्धानाम् । सृष्टिसमुद्रमन्थने प्रवृत्तिरहितानां वा । अतएव तैत्तिरीयब्राह्मणे द्वितीयकाण्डस्थतुरीयप्रश्ने षष्ठानुवाके श्रुतिरपि श्रौतमन्त्रलिङ्गेन वक्ष्यमाणलक्षणनादवागर्थषडध्वलक्षिते प्रकाशानन्दशक्तिनेत्रपरिणद्धविग्रहे च वैश्वानरमूर्तिचक्रे पूर्वदेवानामेव गूढलिङ्गचारन्यायेन मन्थानभैरवरूपतामाह— श्रु॥ "न हि स्पशमविदन्नन्यमस्मात् । वैश्वानरात्पुर एतारमग्नेः । अथेममन्थन्नमृतममूराः । वैश्वानरं क्षेत्रजित्याय देवाः" इत्यादिना । पूर्णभावमास्थितं वा । पूर्णो भावो यस्य तं पूर्णभावं वेत्यर्थः । यद्वा पूर्णभां वमतीति पूर्णभावमः । सचासौ पयोधिः । तं मथ्नन्तीति पूर्णभावमपयोधिमन्थानः । तेषां मध्ये शक्तिनेत्रपरिणद्धमितिवाऽन्वयः । एतेनाग्नीषोमात्मकजगत्सृष्टावग्नेः शक्त्यर्थात्मकत्वेन सोमस्य शक्तिमद्द्रव्यरूपत्वेन च शक्तिमद्द्रव्यस्यैव मन्थदण्डत्वोक्त्याऽशक्तिमद्द्रव्याणामकिंचित्करत्वं कृत्यपंचकक्रियायज्ञेषु । तेन "हविर्यजमानयोः सौम्ययोर्न प्रतिनिधिः" इति मीमांसान्यायस्यानुगृहीततत्वं चार्थादापतितमिति वेदितव्यम् । तथा देवि! तर्पणसुधाकलाश्रयं देवी चिच्छक्तिः तृप्यत्यनयेति देवितर्पणा । संज्ञायां पुंवद्भावः । सा च सा सुधा अमृतात्मिका जीवशक्तिः । सैव कला विद्या । तदा-

श्रयं । यद्वा, देवी तृप्यत्यनेनेति देवितर्पणः स चासौ सुधाकलः चन्द्रः । चिच्छत्तयभिन्नब्राह्मीलक्ष्म्याः सुधाया अपि वारुण्या इन्दुसहोदरीत्वादिति भावः । तदाश्रयः स आश्रयो यस्येति वा देवितर्पणसुधाकलाश्रयः । तमसंस्तुतद्विजराजलक्ष्मीकमपि । द्विसंज्ञयापि द्विजराजशब्दितमित्यर्थः । यद्वा, देवीति सम्बुद्धिः । तर्पणसुधाकलाश्रयम् । हे देवि! तव तर्पणार्था या सुधा तस्यां याः कला अर्घ्यद्रव्यसंस्कारार्थाः । अमृतादिपूर्णामृतान्ताष्षोडश सोमकलाः तन्त्रोक्ताः । चतुर्नवतिकलाभिमन्त्रणपक्षे– अग्निसूर्यसोमकला अष्टत्रिंशत्, ब्रह्मविष्णुरुद्राणां दश दश, ईश्वरस्य पीता श्वेता अरुणा असिता चेति चतस्रः, सदाशिवस्य निवृत्त्यादिव्योमरूपान्ताष्षोडश कलाः, हंसश्शुचिषदित्याद्याश्च पञ्च द्रव्याभिमन्त्रणार्थाः, मूलमनुमूर्तिकलया सह चतुर्नवतिरित्यादि च । एवंविधाः कला आश्रयो यस्य तं, कलानामाश्रयं वा । रुद्रमन्दरम् । स्फुटं स्फोटरूपेण चर्मचक्षुर्वैद्यद्रव्यरूपेण च प्रत्यक्षम् । पटुकरणेन्द्रियरूपं च । तदुक्तं रुद्रप्रपाठकेपि– "नमो रुद्रेभ्यो ये पृथिव्याम्" इत्यादिनान्नवातवर्षरूपाणां स्थूलद्रव्याणामेव यथाक्रमं पृथिव्यादिलोकत्रयस्थितरुद्रगणानामायुधत्वोक्त्या रुद्रगणानामपि नित्यप्रत्यक्षरूपत्वं पटुकरणेन्द्रियत्वं च । एवंविधं रुद्रमन्दरमहं भजे । पञ्चपदार्थकरणकद्रव्यमययज्ञस्य पंचकर्मज्ञानेन्द्रियकरणकवैतानिकसोमयागस्येव विच्छिन्नरुद्रशिरस्सन्धानात्मकत्वभावनया प्रवर्ग्यादिकर्मवत्पञ्चकृत्यात्मिकाया महास्थितेस्तत्रापि साक्षात्प्रधानाङ्गत्वं निरन्तरमनुसन्दधामीति भावः । तदुक्तमभीष्टकाप्रधानारुणकेतुकाग्निब्रह्मविद्याप्रकरणारुणप्रपाठकेपि– "दिव्यस्यैका धनुरार्त्निः । पृथिव्यामपराश्रिता । तस्येन्द्रो वम्रिरूपेण । धनुर्ज्यामच्छिनत्स्वयं । तदिन्द्रधनुरित्यज्यम् । अभ्रवर्णेषु चक्षते । एतदेव शंयोर्बार्हस्पत्यस्य । एतत् रुद्रस्य धनुः । रुद्रस्यत्वेव धनुरार्त्निः । शिर उत्पिपेष । स प्रवर्ग्योऽभवत् । तस्माद्यस्स प्रवर्ग्येण यज्ञेन यजते । रुद्रस्य स शिरः प्रतिदधाति । नैनगूं रुद्र आरुको भवति । य एवं वेद"

इति । पञ्चपदार्थिकरणकपूजामयद्रव्ययज्ञस्य प्रवर्ग्यारुणकेतुकसोमयागादिषु चित्यग्न्यादिसामरस्यप्रकारस्तु गुरुमुखादेवावगन्तव्यः । ग्रन्थविस्तरभयान्नेह प्रतन्यते ॥७॥

एवं श्लोकत्रयेण स्वात्मनः प्रमात्रादित्रिपुटीरूपतया सार्वात्म्यसमुन्मीलनमुखेन द्रव्यमययज्ञस्यापि प्रथमसाधनतामनुसन्धाय तत्र "पतन्ति कर्मणा येन जन्तवो नरके ध्रुवम् । उत्पतन्ति च तेनैव त्रिवालज्ञा भवन्ति च॥" इत्यादिकालिकामतोक्तरीत्या यानि द्रव्यवाक्कर्मादीनि पातकानि तान्येवाभिसन्धिभेदेन मोचकत्वेनापि श्रुतानीति भाववाक्क्रियाद्रव्यमयसाधकाभिसन्धित्रैगुण्येन तामसस्याधःपतनमपि प्रत्यभिज्ञापयन् सार्वात्म्यं समुन्मीलयति—

**योऽभवद्भवति यस्तथेतरो**
**यो भविष्यति पृथ [क्क्रियो] क्क्रमो जनः ।**
**तत्त्रयोदरमहन्त (यै) थैकया**
**संतमस्मि हृदि रंध्रमानतः ॥८॥**

**योभवदित्यादिना** । यः साधकः, मन्थानभैरवरुद्रश्च । पृथक्क्रियः पृथग्भूताः लोकविलक्षणाः क्रिया यस्य स तथोक्तः । अतएवाभवत् । प्रागविद्यावस्थायां पूर्वस्मिन्वा जन्मनि नादानुत्तराकारात्मना सत्ताहीन इवाभवदित्यर्थः । प्रमातृरुद्रपक्षे— "असदेव सोम्येदमग्र आसीत्" इति श्रुत्याऽनभिव्यक्तसत्ताकनामरूपादिमानपि सत्तावानेवाभवदिति । तथैव भवति । भवतीति लटा जगद्रूपेण वर्तनादिति भावः । यश्च तथैवेतरोपि । अत्र इतरशब्दमहिम्ना प्रवाहनित्ये जननमरणसंसारे नाभवन्नभवतिचेत्यपि ध्वन्यते । साधकपक्षे— "पूर्वस्मिन्निव वर्तमानेपि जन्मनि लोकविलक्षणक्रियत्वेन ज्ञानक्रियादिपुरुषार्थवासनाहैन्येन वा सङ्ख्यापूरकसंज्ञामात्रसत्तावानपि न भवतीति ध्वन्यर्थः । रुद्रपक्षेपि— "असन्नेव स भवति । असद्ब्रह्मेति वेद चेत । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति" इतिश्रुतिनिन्दितात्मशून्यताभयमपीदृशाधिकारिणोऽ-

नवभासयन्नभूतभौतिकवस्तुनि भानायोगान्न भासत एवेति भावः । एतद-प्युक्तं गौडपादकारिकास्वलातशान्तिप्रकरणे आत्मभानस्य चतुष्कोट्यव-भासनम् "अस्ति नास्त्यस्ति नास्तीति नास्ति नास्तीति वा पुनः चत-स्रः कोटय" इति । अथ यश्च पृथक्क्रियः । काश्चनाऽऽस्तिक्य उत्तमज-निप्रदाः काश्चन नास्तिक्य अधमजनिप्रदाश्च क्रियाः पुण्यपापव्यवहारेण पृथग्भूताः क्रिया यस्य सः पृथक्क्रियः । पृथक्क्रम इति पाठे–पूर्वो-क्तोत्तमाधमजनापेक्षया पृथग्भूतसंसारक्रम इत्यर्थः । तिर्यगूर्ध्वाधस्स्रोतस्त्र-यात्मकस्याऽहमो नादवागर्थषडध्वकल्पत्रयात्मकत्वा दति भावः । एतेन उत्त-मशिवसंसारापेक्षया अधमपशुसंसारापेक्षया च तृतीयप्रकारकसाधकजीवसं-साररसूचितः । अतएव जनः भाविन्यपि जन्मनि संशयात्मत्वाज्जनिमा-नेवेत्यर्थः । भविष्यति । रुद्रपक्षे अजन इत्यपि पदच्छेदः भवितुमर्हति । यतः कालत्रयेपि लोकशास्त्रविलक्षणक्रियोऽतो जन्मत्रयेपि जन्मसम्बन्धर-हित एव भविष्यतीत्यर्थ श्च । यद्वा, यः साधकः पुरा लोकविलक्षणक्रियोऽ-भवत्, इदानीं भवति, अग्रे भविष्यति चेति वान्वयः । तत्त्रयोदरं ते-षां त्रयाणामुदरभूतम् । एकयाऽहन्तया । एकत्र, गुणत्रयाऽहन्तया अन्यत्र, पूर्णसत्तारूपया च । हृदि रन्ध्रं सन्तमानतोस्मि । अहं तथैकये-ति पाठे-- यथा त्रयाणामुदरभूतस्तथैवैकयाऽहन्तया हृदि रन्ध्र सन्तमह-मानतोस्मीति वा, सन्तं प्रति रन्ध्रप्रमाणतः हृद्यस्मीति वाऽर्थः ॥ ८ ॥

एवं स्वात्मशिवस्यैव त्रिविधसाधकाभेदं प्रत्यभिज्ञाप्य सद्विद्यासम्प्र-दायमार्गप्रवर्तनाय, तस्यैव गुरुपरम्परारूपभेदेन स्वीकृतानेकविग्रहत्वद्योत-नाय च, शाब्दयोगवैद्यनामकप्रस्थानभेदेन वाङ्मनश्शारीरमलत्रयनिवर्तक-गुर्वौघत्रयगुरुपंक्तिसमष्टिमूलभूतं "योगेन चित्तस्य पदेन वाचां मलं श-रीरस्य च वैद्यकेन । योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्रांजलिरान-तोस्मि" इत्युक्तशेषशिवावतारपतंजलिरूपेण शब्दब्रह्मावतारत्वं च द्योत-यन् परौघप्रभृतिशिष्यौघपर्यन्तां गुरुपंक्तिं नमस्करोति—

विश्वसद्मनि सदात्मनीश्वरे
पूरणात्पुरुषतामुपेयु (षे) षि ।
ये मनः प्रणिदधुर्महर्षयः
तान् पतंजलिमुखानुपास्महे ॥९॥

विश्वसद्मनीत्यादिना । विश्वमेव सद्म यस्य तस्मिन् । विश्वस्य सद्मनीति वा । उभयथापि सदात्मनि । परापरवागर्थयोरुपाध्युपहितरूपेण कालत्रयाबाध्यरूपत्वादिति भावः । अत एवेश्वरे "यः पृथिव्यां तिष्ठन् पृथिवीमन्तरो यमयति" इत्यन्तर्यामिब्राह्मणात्, "ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति" इति भगवद्वचनाच्च । शब्दार्थरूपेण सर्वभूतभौतिकनियन्तरि । पूरणात् चिज्जडांशयोस्सार्वात्म्यैकीकरणात् । पुरुषतामुपेयुषि 'पुरि शयनात्, पुरमोषति, पुरैव शेते' इत्यादिनिरुक्तिबहुत्वेपि प्रकृते वागर्थपूर्णभावस्याभिलषितत्वात्पूरणादिति निरुक्त्याश्रयणमिति वेदितव्यम् । पुरुषतामुपेयुषे इति चतुर्थ्यन्तपाठे-- सदात्मनि विषये जीवेश्वररूपेण, गुरुशिष्यस्त्रीपुरुषादिरूपेण वा वागर्थयोराप्तपुरुषभावस्य शब्दब्रह्मणो विद्यामार्गसम्प्रदायसंरक्षणद्वारा परस्परश्रेयःप्रणिधानार्थत्वेन तादर्थ्ये चतुर्थीति ज्ञेया । वक्ष्यति चाग्रेपि-- "यः प्रमज्जयति मूढचेतसः तारयत्यपि स एष धीमतः" इति परस्परप्रमज्जनप्रतारणाभ्यामतिश्रेयः प्रणिधानार्थित्वं गुरुशिष्ययोः । अतः पुरुषतामुपेयुषे । वागर्थान्यतरात्मने तदीयषडध्वात्मने वा पुरुषायेत्यर्थः । ये महर्षयः । परौघमहौघदिव्यौघात्मकवागीश्वरीवागीश्वरावताररूपाः, सिद्धमानवशिष्यौघजीवावतारवागर्थगुरुरूपाश्च ये महर्षय इत्यर्थः । मनःप्रणिदधुः अन्योन्यस्मै मनःप्रणिधानं चक्रुः । पतञ्जलिमुखान् तानुपास्महे इत्युपासनायां साधकजीवसाहित्यद्योतकं बहुवचनम् ॥९॥

एवं सकलौघसमष्टिमयपतंजल्यादिगुरुनमस्कारोत्तरं वागर्थसमष्टिपञ्चवाहमयविश्वोत्पत्तिविपत्तिहेतुस्त्वेष्टदेवतां दिव्याद्यौघत्रयरूपिणीं चिद्व्योमतयाऽनुसन्धत्ते--

खेचरीमुखमरीचिजालकं
व्योमशक्तितनुसंश्र [यं] ये सदा ।
शम्भुदक्षतनुजावभास [ना] या
यत्र विश्वमनुकर्तुमीहते ॥१०॥

खेचरीमुखेत्यादिना । खेचरी मुखे प्रारम्भे यासां मरीचीनां वक्ष्यमाणानां खेचरीभूचरीदक्चरीदिक्चरीगोचरीनामकानां तासां जालकम् । सिद्धानां देहेन्द्रियप्रासादे गवाक्षरन्ध्रसमुदायरूपम्, साधकानामैन्द्रजालिकजीवधीवरनिर्मितेन्द्रियगोलकयुतानायपटरन्ध्ररूपं च यस्मिन्व्योम्नि तत्खेचरीमुखमरीचिजालकम् । 'जालं गवाक्ष आनाये' इत्युभयत्राप्यमरः । शक्तितनु। सिद्धानां सत्यसङ्कल्पत्वात् शक्तेस्तनुरूपम् । शरीरात्मकं शक्तिरेव तनुश्शरीरं यस्येति वा शक्तितनु । साधकानामधिकारभेदेन शक्तिस्तन्यते विस्तीर्यते क्षीयते वा अत्रेति शक्तितनु । यद्व्योम दहरापरपर्यायं चिद्गगनम् । तदहं सदा संश्रये । सार्वकालिकाविस्मरणेन स्वस्वरूपतया कलये । शक्तितनुसंश्रयमिति पाठे-- शक्तितन्वोस्संश्रयमितिसिद्धपक्षे, शक्तितनू संश्रयो यस्येति साधकपक्षे च विग्रहभेदेन व्योम्न एव विशेषणं ज्ञेयम् । अस्मिन्पाठे तादृशं व्योमास्तीति शेषः । यत्र व्योम्नि शम्भुदक्षतनुजावभासया । शम्भोरानन्दपरमावधिस्वरूपसुखभूमेरात्मनो दक्षतनुजायाः तत्तत्कार्यसमर्थदेहेन्द्रियादिस्वाभिन्नव्यवहारसत्पुरुषकारान्तःकरणवृत्तेश्च । अवभासया । प्रकाशविमर्शसामरस्यरूपेणेति यावत् । शम्भुदक्षतनुजावभासनेति प्रथमान्तपाठे- शम्भुस्सुखभूमिरात्मा । दक्षतनुः ज्ञाने कर्मणि वा समर्थं शरीरम् । ताभ्यां तयोर्वा जायत इति शम्भुदक्षतनुजा । साच सा ऽवभासनैव । शम्भुदक्षतनुजावभासना । यद्वा, आदिहान्तकामकलात्मकमातृकार्णमालायामाद्यन्तवर्णप्रत्याहारसम्पादिताहमक्ष मातृकार्णप्रत्याहारं वागर्थमर्यादया खण्डीकृत्य अः कथेत्यात्मविसर्गकथाबोधकाथशब्दार्थरूपेण "ओंकर श्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ" इति स्मृतिप्रतिपादितमङ्ग-

त्वागर्थरूपं, अकथादिषोडशार्णमयरेखात्रयत्रिपुट्यां त्रयस्त्रिंशद्वर्णप्रत्याहारसिद्धकालीकालमिथुनरेखाद्वयं, त्रिकोणवर्णरेखास्वनन्तरकर्ण्यजन्मादिवाचकाथशब्दरूपमुपास्य तत्सिद्ध्यनन्तरमादिक्षान्तसमेरुवर्णमालायां थकारानन्तरदकारादिक्षान्तवर्णप्रत्याहारेण दक्षशब्दरूपनिष्पत्तेः जायमानत्वादन्तरक्षशब्दार्थाहंप्रत्ययस्यैव दक्षत्वमपि सिद्ध्यति । तदानीमक्षमेव दक्षमप्यहंप्रत्ययवच्छब्दार्थैकरसं भवितुमर्हति । तथाच, शम्भुना खण्डितजीवशिवेन, दक्षेण समर्थेन्द्रियेण, तन्वा शरीरेणच, जायमानाऽवभासना, शम्भुदक्षतनुजा इत्युच्यते इति वा ऽर्थः । तादृशी अवभासनैव । विश्वं व्यावहारिकं जगत् सत् अनुकर्तुम् । शब्दार्थावेव परस्पराकारेण परस्परमनुकर्तुमिति भावः । ईहते इच्छदिव वर्तते । तद्योम संश्रये । अस्तीति वा पूर्वेणान्वयः । इममेवार्थं शब्दार्थसामरस्यात्मकं कालीकालस्वरूपतत्वं श्रीभैरवीपराभट्टारिकायै– 'अथाद्यास्तिथयस्सर्वे' इत्यादिना उपदेष्टुमथशब्दः श्रीत्रिकशास्त्रारम्भे श्रीभैरवभट्टारकेण प्रयुक्त इति तन्त्रसारे लघुविवृतौ श्रीमदाचार्याभिनवगुप्तपादैस्सोपपत्तिकं प्रपञ्चितस्तत्रैव द्रष्टव्यः । अकथादिषोडशषोडशार्णमयरेखात्रिपुटीप्रत्याहारादिकथा तु प्रक्रियामात्रपराणां बालानामवबोधनायास्मत्कपोलकल्पितकथाचमत्कारमात्रमित्यलं युक्तिप्रस्तारपल्लवितेन ॥ १० ॥

एवमिष्टदेवतास्पन्दात्मकं, दहरापरपर्यायं, चिद्व्योमसत्तास्वरूपमनुसन्धाय तत्र प्रकाशविमर्शात्मनोश्शिवशक्त्योरखण्डखण्डात्मनो श्च सिद्धमानवौघयोश्शाक्ताणवविसर्गयोः द्योत्यद्योतकभावं विविनक्ति—

खण्डसत्प्रसरगर्भया यया
लक्षितं स्फुरणपूर्णसत्तया ।
तत्त्वमैश्वरमखण्डमम्बिकाम्
त्वां प्रणौम्यखिलतत्त्वनायिकाम ॥११॥

खण्डेत्यादिना । खण्डसत्प्रसरगर्भया । खण्डात्मनापि सद्रूपाणि यानि षट्त्रिंशत्तत्वानि तेषां प्रसरः गर्भे यस्यास्तया अतएव स्फुरणपूर्णसत्तया

तत्वाकारेण खण्डस्वरूपत्वेपि स्फुरणाकारेण पूर्णाखण्डस्वरूपया यया-म्बिकया ऽखण्डमैश्वरं तत्त्वं । स्वरखण्डरूपेण शब्दात्मना ऽर्थात्मना च नादनाधसामरस्यरूपेणाखण्डमकारस्वरखण्ड खण्डाकारभिन्नं । तदीयार्थरूपंच तत्त्वमित्यर्थः । लक्षितं भवति । लक्षणया प्रतिपादितं लक्षणेन प्रदर्शितं वा भवतीत्यर्थः । अखिलतत्त्वनायिकाम् । उक्तप्रकारेणाखिलषट्त्रिंशत्त-त्त्वानां वागर्थतत्त्वस्य च नायिकां तादृशीं त्वां प्रणौमि । प्रकृतिनाम्ना सकलतत्त्वग्रहणस्यानुभूयमानत्वादिति भावः । यद्वा, खण्डसत्प्रसरगर्भया ययाम्बिकया स्फुरणपूर्णसत् लक्षितं लक्षणया बोधितं, तया ऽखण्डमैश्वरं तत्त्वमपि लक्षितं । तस्मादखिलतत्त्वनायिकां खण्डाखण्डयावत्तत्त्वनायि-कामित्यर्थः । अतएवाम्बिकां त्वां प्रणौमीतिवान्वयः ॥ ११ ॥

एवं शिवशक्त्योः द्योत्यद्योतकभावं विविच्य पराप्रासादवागर्थात्मना सिद्धवस्तुत्वेपि श्लेषमर्यादया शिष्यौघे पारोक्ष्यमापादयन्कालपलितशिरसीव ज्ञानपलितशिरस्यपि षडध्वातीतवागर्थयुगलात्मना व्यावहारिकमाश्रयाश्रयि-भावमपि विवेचयति—

> **यः किलास स किलास ईश्वरः**
> **ख्यातसत्व (उर्ध्व) लुलि)तो (ध्व) र्ध्वमूर्धनि ।**
> **प्रत्य [सौ] हं जननि! यत्र तिष्ठति त्वं**
> **स (तत्व) सत्ववपुरद्रि (क) रस्य यः ॥१२॥**

यः किलासेत्यादिना । य ईश्वर आसकिल । स आसकिलैव । उभ-यत्रापि विध्यनुवादस्थानीयपुरःपश्चाद्वादयोः किलेति पारोक्ष्य एव । अज्ञा-निनामलकानाम्नि नगरे परोक्षत्वेन वर्तनादिति भावः । यद्वा, य आस-किल सकिलासे तन्नाम्नि गिरौ आसकिलेति वा । हेजननि! असौ ईश्वरः । ख्यातसत्त्वलुलितोर्ध्वमूर्धनि ख्यातसत्त्वेन लुलितं यदूर्ध्वं शुद्धसत्त्वं सत्त्वप्र-धानेनापि सत्त्वेन, सत्त्वप्रधानेन रज उपसर्जनेनापि रजोमिश्रितसत्वेन, सत्त्वप्रधानेनैव रजस्तमोमिश्रितेन च एवं त्रिभागीकरणेपि प्रतिभागं स-त्त्वस्यैव प्राधान्यात् ख्यातसत्त्वेन लुलितस्योर्ध्वमूर्ध्नः द्वादशान्तशिरोभागस्य

शुद्धसत्त्वत्वम् । एवं ख्यातसत्त्वलुलितयोर्ध्वमूर्ध्नः द्वादशान्तशिरोभागस्य कैलासस्थानापन्नस्योर्ध्वमूर्धत्वं च । ख्यातसत्त्वलुलितोर्ध्वमूर्धनीति पाठे-- अध्वमूर्धनि वागर्थषडध्वोपरिभागे ख्यातसत्त्वलुलित । ख्यातसत्त्वेन पूर्वोक्तत्रिभागीकृतसत्त्वेन लुलितः विशेषणीकृत इतीश्वरविशेषणम् । एवं उदितोर्ध्वमूर्धनीति पाठे-- अध्वमूर्धनि वागर्थषडध्वद्वादशान्तशिखायाम् । उदितः सञ्जातोदयः । इति । उदितोर्ध्वमूर्धनीति पाठेपि सञ्जातोदयशिरस ऊर्ध्वभागे ख्यातसत्त्वः ख्यातसत्त्वेवा किलासे । ईश्वरः प्रतितिष्ठतीतीश्वरविशेषणम्, किलासविशेषण वा । असौ ईश्वरः यत्र प्रतितिष्ठति । प्रत्यहमिति पाठे-- प्रत्यहं सदा यत्र तिष्ठतीति स्पष्टोर्थः । अस्य प्रतितिष्ठत ईश्वरस्य । योऽद्रिः निवासभूतकैलासाद्रिः । स सत्ववपुः पूर्वोक्तत्रिभागीकृतशुद्धसत्त्वशरीरः । त्वमेव । त्वमेव कैलासाद्रिरूपेत्यर्थः । एवं त्वं स तत्ववपुरद्रिकस्येति पाठे-- अल्पः अद्रिः अद्रिकः इत्यल्पार्थे कप्रत्ययः । अद्रिकस्य परिमिततत्वमयस्य कैलासगिरेः । त्वं स्तत्ववपुः परिमिततत्वसहितशरीरमपि त्वमेवेत्यन्वयः । ईश्वरभोगाय तदिच्छानुकूलशरीरात्मिका त्वमिति भावः । एवमविदुषां परोक्षशिवशक्तिसमन्वयानन्तरं विदुषां सिद्धवस्तुत्वेनापरोक्षसमन्वयपक्षे तु "ब्राह्मणोस्य मुखमासीत्" इत्यादिश्रुत्युक्तचातुर्वण्योत्पत्तिहेतुभूतविराट्छरीरे भागकल्पनवदेव पादादिशिरःपर्यन्तं परिच्छिन्नशरीरेपि मूर्तिमयवागर्थचतुष्टयभागकल्पेनेन शिरसः परावागर्थमयपरमशिवभागत्वम् । वयोमानभागेष्वपि वार्थक्यस्य शिवाभेदं चाध्यारोप्य "किलासं पलितं च यत्" अस्थिजस्य किलासस्य । तनूजस्य च यत्त्वचि । कृत्यया कृतस्य ब्रह्मणा । लक्ष्मश्वेतमनीनशम्" इति मन्त्रोक्ताकालिकवार्थक्यरोगादिकृतपलितश्वेतादिलक्ष्मणः किलासशब्दार्थस्यायुर्वेदादिशास्त्रोक्तकायकल्पाद्यौषधसेवनचिकित्सादिभिः प्रतीकार्यत्वेपि कालपक्वशतवार्षिकशिरःपलितादिलक्ष्मणः अप्रतीकार्यत्वेनानुभवैकनिवर्त्यत्ववत्कालीशब्दार्थकालशक्त्युपासनावैभव पक्वपरश्शतजन्माद्यनुभवागतज्ञानवृद्धाभिन्नवागर्थसिद्धनादनाद्ययुगलाभिन्नं शिर एवा-

त्र वैलासार्थबोधकविलासशब्दार्थरूपेण कविना विवक्षितमिति निश्चि-त्य व्याक्रियते। तथाच, यः किलासः वागर्थसिद्धादिनादनाथयुगलशिरो-रूपः। सः सएवकिल। आसः अनुत्तरादिसान्तप्रत्याहारः। शाक्तवि-सर्गरूपः। किलासश्च। श्रुतिस्मृतिपुराणागमाद्यार्षानार्षवाङ्मयवर्णितः कैलासाद्रिश्च। कुत इति चेत्, ख्यातसत्वलुलितः। आसमन्तात्प्रख्या-तसकारबीजत्वधर्मेणानुत्तरशाम्भवविसर्गगर्भितेन लुलितः। तादृशशा-क्तविसर्गधर्मेण आ- स्- :× आसः इत्याकारेण संजातलोलश्चेत्यर्थः। लुलितः उदितो वा। अध्वमूर्धनि वागर्थषडध्वशिरसि। यत्र शाम्भ-वानुत्तरबिन्दुधर्मेण, शाक्तानुत्तरनादधर्मेण वा क्रमेणान्तर्बहिश्च लुलितश्चेत् अन्तः अं इति नादधर्मेण बहिः अ ः ०। अहमिति अहं-शब्दार्थशाक्तनादयुतशाम्भवबिन्दुरूपेण च लुलितः। असौ इत्याकारक-पराशाक्तनादबिन्दूप्रति। प्रतिनिधितयेत्यर्थः। तिष्ठति। तथैव शा-क्तानुत्तरनादसकारबीजधर्मेण शाम्भवानुत्तरबिन्दुसकारबीजधर्मेण च बहिरन्तश्चोदितश्चेद्वागर्थषडध्वशिरस्येव बहिः। 'अस्- आ- ऊ' इति त्रि-च्छिन्नस्वराख्यानुत्तरानन्देच्छा ईशनोन्मेषोर्म्याख्यवक्ष्यमाणलक्षणषड्विध-परामर्शपराशाक्तनादरूपेण आस इति त्रिच्छिन्ननादोपाधिबहुत्ववाचिशब्द-रूपेण। अन्तश्च। असावित्याकारकादिनाथशाम्भवबिन्दुस्वस्वरूपेण च पिण्डीभूतानुत्तरसाक्षिभास्यमहमित्याकारकं परशाम्भवत्रिपुटीबिन्दुत्रयं प्रति '० ०' एतद्बिन्दुत्रयप्रतिनिधितयेत्यर्थः। तिष्ठति च। ख्यातसत्वलुलि-तोर्ध्वमूर्धनीति। उदितोर्ध्वमूर्धनीति वा। पाठान्तरद्वयेपि वा। लुलितात्य-न्तोपरिभागे 'बिन्द्वर्धचन्द्ररोधिन्यो नादनादान्तशक्तयः। व्यापिका सम-नोन्मन्यो नवनादाः प्रकीर्तिताः' इत्युक्तनादनवकोपरिभागे सांख्ययोगशा-स्त्रोक्तदशमनादमहाबिन्दुरूपे इत्यर्थः। अन्तर्नादस्वरूपे आदिनाथादिनव-नाथसमष्टिस्वरूपादिनाथेन तदभिधेयेऽन्तः। अहमिति वा। असाविति वा प्रतितिष्ठतीति। उदितोर्ध्वभागे पूर्वोक्तशाम्भवबिन्दुनादत्रयपरामर्श-त्रयेण षट्केन वा शाक्तनादत्रयादिरूपेण वा नादनवकस्य तत्समष्टेश्चवा

गणने द्वादशान्तषोडशान्तादिमहाबिन्दुरूपे उन्मिषितद्वादशान्तादिस्थाने च प्रतितिष्ठति । बहिश्चासौ स्वरखण्डनादइत्याकारेणाहं चामुकानन्दनाथोमुकाम्बा वा । इत्याकारेण च प्रतितिष्ठतीति चार्थः । एवं यत्र अहं प्रत्यसावित्याकारेण प्रतियोगितया, असौ प्रत्यहमित्याकारेणानुयोगितया च अन्तर्बहिश्च वा प्रतितिष्ठतीति । हेजननि! अस्य परावागर्थरूपस्य । ऽहमित्याकारकात्ममन्त्रे ऽसावित्याकारकपरामन्त्रे च विद्यमानस्याकारांशस्येति च ध्वन्यते । योऽद्रिः । पूर्वोक्ताहमर्थरूपोऽसावर्थरूपो वा नादोत्पत्तिभूमिः । नाथनिवासभूमिर्वा कैलासाद्रिरित्यर्थः । सतत्ववपुः पूर्वोक्तपरामन्त्रे सकारबीजाक्षरतत्वस्य शरीरम् । त्वं शाक्तविसर्गरूपिणी । 'स् औ, इत्युक्तप्राणस्पन्दात्मिका त्वमेवेत्यर्थः । अद्रिकस्य य इति पाठे— सतत्ववपुरिति द्वितीयपाठमाश्रित्यान्वयः । अद्रिकस्य ज्योतिश्शास्त्रमर्यादयाऽकारमात्रद्रेक्काणरूपस्य वक्ष्यमाणभागत्रयसमुदाये प्रधानभागस्येत्यर्थः । यद्वा, अकारनादात् अदस् इत्याकारकपरोक्षशब्दार्थरूपाद्विच्यमानाऽकारस्येति वा। अर्थात् सकाराख्यशाक्तानुत्तरविसर्गबिन्दुभ्यां नादाद्वा विविक्तरूपस्येति लभ्यते । तादृशस्याद्रिकस्य शाक्तविसर्गैकदेशेपरामन्त्रैकदेशस्यवा सत्ववपुः सत्वप्रधानशाम्भवानुत्तरनादनाथसामरस्यशरीरम् । सः अहं । परोक्षतच्छब्दार्थशरीरो अपरोक्षाहंशब्दार्थशरीरो भवतीत्यर्थः । असावहमिति प्रत्यभिज्ञया, सोहमित्याकारेण प्रत्यभिज्ञातस्वरूपेण वा स्वरूपानन्दसाक्षात्कारवान्भवतीति तात्पर्यार्थः । स एवाहं सत्ववपुश्चेत्यर्थोपि ध्वन्यते विदुषां सिद्धवस्तुत्वेनापरोक्षसमन्वयपक्षे । अतएव परौघादिदिव्यौघान्तपतञ्जल्यादीश्वरावतारगुर्वौघत्रये पतञ्जलिरिव सिद्धौघादिशिष्यौघान्तकालिदासादिजीवावतारगुर्वौघत्रयस्य कूटस्थादिगुरुनाथरूपः कालिदास इत्यत्र न कस्यापि विवाद इति सर्वमवदातम् ॥१२॥

एवं स्वात्माभेदेन वागर्थकालीकालयोर्वागर्थनादत्रिपुटीशरीरेण च गुर्वौघषट्कगतमात्माश्रयाश्रयिभावमुन्मील्य, अतीन्द्रियत्वेनानिर्वचनीयतां वदन् पूर्णभात्रमप्युन्मीलयति—

कल्पनातिगमतीन्द्रियं च य
लक्ष्यमुज्झति बहिर्मुखं (त्रिधा) तथा ।
अन्तरालगमभावभावयो
स्तं नतोऽस्मि सदहं निराकृ(तिं) ति ॥१२॥

कल्पनातिगमित्यादिना । यत् सोहं प्रत्यभिज्ञारूपपूर्वश्लोकोक्तकैलासाद्रिमयं वपुः । अतीन्द्रियं द्वादशान्तादिरूपेण वागर्थनादलयस्थानत्वादिति भावः । अतएव कल्पनातिगं च । वागर्थकल्पकस्वात्माहंकारकुलेश्वरस्यापि लयस्थानत्वेन तत्र कल्पकाभावेन कल्पनाया अप्ययोगादिति भावः । तथैव बहिर्मुखं लक्ष्यमुज्झति ! अधोक्षजज्ञानतत्वरूपतया पराङ्मुखेन्द्रियवृत्तिलक्ष्यतामप्युज्झतीत्यर्थः । तदुक्तं श्रुत्या "परांचिखानि व्यतृणत्स्वयंभूः तस्मात्पराङ्पश्यति नान्तरात्मन्" इति । त्रिधेति पाठे— दिव्यसिद्धमानवौघत्रयगतपरामर्शसिद्धिमयशाक्तत्रिपुटीरूपेण । प्रमात्रादित्रिपुटीरूपेणापि वा शाम्भवेन । बहिर्मुखं लक्ष्यमुज्झतीत्यर्थः । षड्ध्वात्मकवागर्थनादत्रिपुट्याः स्वस्यापि लक्ष्यान्तरापेक्षायामनवस्थापातेन तुरीयसाक्षिरूपेण स्वस्यैव परस्परलक्ष्यत्वादिति भावः । अतएव भावाभावयोरन्तरालगम् । भावेषु घटादिषु भावबोधकवागर्थरूपेण, अभावेषु वन्ध्यापुत्रादितुच्छेष्वपि तद्बोधकसदसद्विलक्षणशब्दानुपातितृतीयतुच्छवागर्थरूपेण तुरीयसाक्ष्यात्मना च वा स्वस्यैव स्थितत्वादिति भावः । तदुक्तं महार्थमंजरीपरिमले— "सदसत्वेन भावानां युक्तानां द्वितयी स्थितिः । तामुल्लङ्घ्य तृतीयस्मै नमश्चित्राय शम्भवे" इति । अतएव निराकृति यथा तथा आत्मेतरनिराकरणं यथा भवति तथा । सदहं । पारमार्थिकाहंशब्दर्थरूपं तं कैलासाद्रिं वा नतोस्मि । एतदेव पारमार्थिकसदहंवागर्थरूपमात्मतत्त्वमुपदेशसाहस्र्यां श्रीशङ्कराचार्यगुरुपादैरप्युक्तं— 'सम्भाव्यो गोचरे शब्दः प्रत्ययो वा न चान्यथा । न सम्भाव्यौ तदात्मत्वादहंकर्तुस्तथैव च" इति । निराकृतिमिति पाठे—तमित्यस्य कैलसाद्रेर्विशेषणम् । नन्वत्र स्वात्मन एव नम्यनंतृभावः कथमिति न शङ्कनीयम् । स्वस्मिन्नेव वागर्थांशकल्पनेन

तद्नुपपत्तेः । तथाचोक्तम्— "दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये । ज्ञातृज्ञेयस्वरूपाय मह्यमेव नमो नमः" इति ॥ १३ ॥

तस्यैव व्यापकविद्याऽविद्याभुवनात्मना ब्रह्मस्वरूपतामप्याह—

अम्ब! यद्भवति तत्तदात्मना
स्वैरितामजहदद्वयोदयम् ।
तावकं पद (म) मुपाकृतक्रमं
ब्रह्म तत्सदिति (द्धि) वा श्रुतं भजे ॥ १४ ॥

अंबेत्यादिना । हेअम्ब! भारते शान्तिपर्वणि २६६ अध्याये "अङ्गानां वर्धनादम्बा" इति निरुक्तेः । यद्वा, "अम्बे अम्बाल्यम्बिके" इत्यश्वमेधप्रकरणमन्त्रोक्तमहाप्राणसत्वप्रकृतिरूपिणीति वा अं पूर्वोक्ताकारस्वरनादात्मकवागर्थरूपं बमतिवबयोरभेदविवक्षया वातीति वा अम्बा । तस्यास्सम्बुद्धिरम्ब दहरात्मिके इत्यर्थः । यत् पूर्वश्लोकोक्तकैलासाद्रिमयं वागर्थशरीरमयं वा तावकं पदम् । तत्तदात्मना देशकालपदार्थाद्यात्मना भवति। तदुक्तं सौभाग्यहृदये— "देशकालपदार्थात्मा यद्यद्वस्तु यथा तथा । तत्तद्रूपेण या भाति तां श्रयेऽहं विभोः कलाम्" इति । "स्थितिर्नाम स्वरूपस्य तत्तद्रूपतया धृतिः" इति श्रीसंवित्स्तोत्रे च । पुनः कीदृशं? स्वैरितां स्वस्वरूपाभेदेनेरितां परात्मिकां वाचमजहत् । अतएवाद्वयोदयमद्वितीयत्वेनोदीयमानस्फुरणात्मकम् । तदुक्तं शिवसंहितायाम् "अकारस्सर्ववर्णाग्र्यः प्रकाशः परमशिवः । हकारोन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः ॥ अनयोस्सामरस्यं यदहमित्येव निर्मलः । अहन्ताभासितं भास्यमिदंताख्यं च तन्मयं । अनयोस्सामरस्यं यत्पूर्णाहन्ता परा मता" इति । अतएव श्रीपादुकोदये वाक्छब्दनिरुक्तिरप्येवमेव दर्शिता— "त्वामुपासितगुरूत्तमाः परां वाचमाहुरविभक्तविश्वकां । स्वप्रकाशनविमर्शनात्मिकां वक्ति वागिति निरुक्तिमास्थिताः" इति । पुनरपि कीदृशं? अपाकृतक्रमं । अपाकृतः त्यक्तः क्रमः आविद्यकसृष्ट्यादिक्रमः यस्मिन् तत् येन वा तत् । उपाकृतक्रममिति पाठे— आरब्धोल्लङ्घनात्मकक्रममित्यर्थः । सच क्रमः एवं

दर्शितः श्रीसंवित्स्तोत्रे— भावावृत्तिषु ताश्चित्ते चित्तं संविदि सा परे। व्योम्न्यस्तंगमिता यत्र क्रम उल्लङ्घनात्मकः" इति। मातृकास्तवराजे कालिदासेनापि दर्शितो यथा— "जगत्काये कृत्वा तदपि हृदये तच्च पुरुषे पुमांसं विन्दुस्थं तमपि वियदाख्ये च गहने। तदेतत् ज्ञानाख्ये तदपि परमानन्दगहने महाव्योमाकारे त्वदनुभवशीलो विजयते" इतिच। एतादृशं तावकं पदं। ब्रह्मेति सुप्रबुद्धं प्रवृद्धं वा महदानन्दरूपमिति। तदिति। परोक्षमिति। सत् पारमार्थिकप्रत्यक्षरूपमिति च श्रुतं हि। प्रसिद्धं श्रुतिप्रतिपादनमिति भावः। तत्सदिति वा श्रुतमिति पाठे— वा विकल्पेन। नामरूपांशराहित्येनेत्यर्थः। ब्रह्मादिपदजातेन श्रुतं श्रुतिप्रतिपादितं भजे इत्यन्वयः ॥१४॥

एवं ब्रह्मस्वरूपतां निरूप्य तस्यैव पाठभेदेन अध्यारोपापवादाभ्यामपि स्वस्वरूपत्वबोधनाय कर्महेतुविधिनिषेधमार्गेणापि तद्धितबहिर्विजृम्भणं दर्शयति— देशकालेत्यादिना।

देशकालकलनाविशेषतो
यद्भवानि विहितं (निगद्यते) निषिध्यते।
व्यक्तिजातितनुसंश्रितक्रमं
तद्धितं तव बहिर्विजृम्भणम् ॥१५॥

हेभवानि! भूधात्वर्थकजातिसत्तासामान्यादिज्ञानप्रधानशिवसंसारवाचकभवशब्दार्थभूतभवस्य पत्नि, पालयत्रीति वा। साभिप्रायस्सम्बुद्ध्यर्थः। देशकालकलनयोर्विशेषतः। यथा "प्राचीनप्रवणे वैश्वदेवेन यजेत" "रेवातीरे तपः कुर्यान्मरणं जाह्नवीतटे" इत्यादिदेशकलनायाः यथावा। "वसन्ते वसन्ते ज्योतिषा यजेत" 'उदगयनपूर्वपक्षेषु पुण्याहेषु कार्याणि' "अधिवृक्षसूर्ये वाचं विसृजति" 'ग्रस्ते स्नायात्' इत्यादिकालकलनायाश्च। यद्वा, पूर्वोक्तदेशकालयोर्मध्ये देशस्य कलातत्त्वभुवनात्मकार्थाध्वत्रिके कालस्य वर्णपदमन्त्रात्मकशाब्दाध्वत्रिके चान्तर्भावात्तयोः देशकालयोः कलनानां क्रियाज्ञानानां "क्षेपो ज्ञानं च संख्यानं गतिर्नाद इति क्रमात्" इत्यु-

त्तकलनाशब्दार्थरूपाणां वा । अथवा कलनायाः "येदं कृत्वा वेदिं करोति" "ज्ञात्वा कर्माणि कुर्वीत" इत्यादिक्रमविशेषज्ञानस्य वा । विशेषतः भेदविधाननिषेधमार्गे स्ववागर्थक्रियाक्रमभेदविधिनिषेधमार्गविशेषादित्यर्थः । व्यक्तिजातितनुसंश्रितक्रमं व्यक्तिसंश्रितक्रमः "स्वर्गकामः, पुत्रकामः, भूतिकामो यजेत" इत्यादिः । जातिसंश्रितक्रमः "ब्राह्मणो बृहस्पतिसवेन यजेत । राजा राजसूयेन । वैश्यो वैश्यस्तोमेन यजेत । वर्षासु रथकारोग्नीनादधीत । एतया निषादस्थपतिं याजयेत्" इत्यादिः । तनुसंश्रितक्रमस्तु "कृष्णकेशोऽग्नीनादधीत' 'श्वेतमालभेत" इत्यादिः । एवं व्यक्तिजातितनुसंश्रितक्रमम् । विहितं सञ्जातविधिव्यापरम् । यन्निगद्यते । अध्यारोपविधिव्यापारेण कण्ठरवेणेवोच्यते । निषिध्यत इति पाठे— अध्यारोपक्रमविहितं नेतिनेति वाक्यैः 'आत्मा पुरस्ता' दित्यादिदेशविशेषतः, 'भूतं भव्यं भवच्च सर्वमात्मै'वेति कालविशेषतः, 'यस्यामतं तस्य मत'मित्यादिकलनाविशेषतश्च । तथा— 'न जातु कामः कामानामुपभोगेन शाम्यति' 'अशनाया पिपासादिरहितम्' 'पिताऽपिता भवति' 'देवा अदेवाः' 'वेदा अवेदाः' इत्यादिव्यक्त्याश्रितक्रमनिषेधमुखेन, 'अपेतब्रह्मक्षत्रादिभेद' मित्यादिजात्याश्रितक्रमनिषेधमुखेन, 'अरूपमस्पर्शं' 'अस्थूलमनणु' इत्यादितन्वाश्रितक्रमनिषेधमुखेन च । यन्निषिध्यते । ऐकात्म्यप्रत्ययसारकनिषेधवाक्यैरतद्व्यावृत्त्या अपोद्यते । तत्तत्र बहिर्विजृम्भणं । विधिमुखेन निषेधमुखेन वा बहिर्विलसनमित्यर्थः । हितं यथाक्रमं साधकानां सिद्धानां च पथ्यमेवेत्यर्थः । प्रतिषेधस्य प्रसक्तिपूर्वकत्वनियमात् विद्याकरणकनिषेधस्याविद्याप्राप्तिपूर्वकत्वं नियमितमिति भावः । किञ्चात्र तत्र बहिर्विजृम्भणं वागर्थयोर्विधिमुखेन निषेधमुखेनापि । तद्धितमेव सास्य देवतेति प्राकृतात्मदैवत्यतद्धितप्रत्ययवागर्थरूपमेवेत्यपि गम्यते । देवतारूपे विधिनिषेधांशयोस्तद्धितप्रत्ययवागर्थव्यापारस्यैव बलवत्तरत्वाच्च । तथाचोक्तं वार्तिकेपि— 'तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः । देवताया विधिस्तत्र दुर्बलं तु परं परम्' इति । तेन विद्यावस्थायां विद्वद्भिरन्त-

र्मुखैस्सिद्धैः शनैश्शनैर्विद्याभिवृद्धिवशाद्भक्त्याद्याश्रितोऽभ्यासक्रमः विद्याफललाभाय विरोधितया यथा यथा निरस्यते तथा तथा अविद्यावस्थायामविद्वद्भिर्बहिर्मुखैस्साधकैश्शनैश्शनैरविद्यावृद्धिवशात्स एवाभ्यासक्रमोऽविद्याफललाभायाविरोधिततयानुष्ठातुमाद्रियत इत्ययमर्थः अनुरणनध्वनिमर्यादया सिद्धयति । "बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते । वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः ॥ कामैस्तैस्तैः हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः । तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥" इत्यादिभगवद्वचनानि, "नीतिज्ञा नियतिज्ञाः शास्त्रज्ञास्सन्तु लोकेस्मिन् । ब्रह्मज्ञा अपि भवन्तु वेदज्ञास्स्वाज्ञानज्ञानिनो विरलाः ॥" इत्यादिमहामहोपाध्यायनीलकण्ठदीक्षितसुभाषितोक्तिश्चास्मिन्नेवार्थे पर्यवस्यन्तीति दिक् ॥१५॥

एवं हृद्गुहामित्याद्येकादशभिः सूत्रप्रायैः श्लोकैरेकरूपेण प्रथमश्लोकोक्तवागर्थमयस्वात्मवस्तुनः विधिनिषेधापरपर्यायसृष्टिसंहारक्रमाक्रमाभ्यां द्व्यर्थक्रमसुपन्यस्य तयोरधिष्ठानास्फुरणशङ्काकलङ्कितानामवबोधाय तस्यैव क्रमाक्रमप्रतिनिवर्तनेन त्रिपुटीप्रभृतिद्वादशषोडशान्तपार्यन्तिकप्रस्तारभेदेन त्रिचतुःपञ्चव्यूहमहार्थक्रमरूपतामपि वक्तुं छान्दोग्योपनिषन्निरुक्तत्रिवृत्कृततेजोऽबन्नात्मकभूतत्रयस्थूलसूक्ष्मरूपत्वेन गुणत्रयात्मना सृष्ट्यादिकृत्यत्रयस्फुरणरूपतां च प्रतिजानीते—

सत्त्वमम्ब विहितस्य वस्तुनः
तत्प्रसादित [त] दयोदयं वपुः ।
स्यात्तमश्च यदिदं निषिध्यते
(द्वे) द्वैरजः सदसदन्यरुपतः ॥१६॥

सत्त्वमंबेत्यादिना । हेअम्बेति सम्बुद्धिः पूर्ववत् । विहितस्य उपादेयत्वेन हेयत्वेनानुष्ठातव्यत्वेन वा सञ्जातत्रिविधविधिप्रत्ययव्यापारस्य । वस्तुनः वसत्यस्मिन्नात्मस्वरूपमिति व्युत्पत्त्या सिद्धद्रव्यरूपस्य साध्यस्य वा वागर्थैकरूपस्य । तत्प्रसादितदयोदयं । तत्प्रसादितः तद्वस्तुप्रसादीकृतः । दयायाः भूतदयायाः उदयः उत्पत्तिः यस्मिन् तत् तादृशं वपुः

उच्यतेऽस्मिन् दयाबीजमनेनेति वा व्युत्पत्तिभेदेनाभ्यन्तरं बाह्यं वा दयामयं शरीरम् । सत्वं नाम गुणो भवति । अयमाशयः "रस्याः स्निग्धाः स्थिराः हृद्या आहारास्सात्विकप्रियाः" इत्यादिविधानवत् । यद्वस्तु वागर्था-न्यतराकारेण सेव्यत्वेनानुष्ठातव्यत्वेन वा विहितम्, तद्वस्तुसेवनप्रसा-दीकृतसर्वभूतदयोदयवती या ऽहन्ता तन्मयं वपुः पूर्वोक्तकैलासापरपर्यायं सत्वमित्युच्यत इति । तत्प्रसादिततयोदयमिति पाठे- तद्वस्तुकृतप्रसाद-त्वेनोदीयमानं वपुरित्यर्थः । तथा यदिदं निषिध्यते तत्तमश्च स्यात् । इदंतैव तमोगुणस्थूलरूपतया निषिध्यत इति भावः । एतेन वागर्थात्मके स्वात्मरूपे अहंतेदन्ताबुद्ध्योरेव विधिनिषेधविषयत्वं न स्वरूपवस्तुन इति सिद्धम् । तदुक्तं वेदांतपञ्चदश्यामपि चित्रदीपे श्रीविद्यारण्यगुरुपादैः वा-गर्थयोः जीवजगद्भावमभिसन्धाय— "जीवभावजगद्भावबाधे स्वात्मैव शि-ष्यते । नाप्रतीतिस्तयोर्बाधः किन्तु मिथ्यात्वनिश्चयः ॥" इति । एवं सदसदन्यरूपतः । सदसतोः पूर्वोक्ताहन्तेदन्ताबुद्ध्योरन्यरूपतः । रूपभे-दात् । सदहं । इदं बुद्धिगोचरो नास्मि । असदिदं । अहं बुद्धिगोचरे-न भवितुमर्हतीत्याकारकवागर्थस्वस्वरूपभेदादित्यर्थः । द्वे अहन्तेदन्ते । मिलित्वेति भावः । रजः नाम भवति । द्वे रज इति पाठे— द्वयो रजसो वागर्थपरमाण्वोस्समाहारौ द्वैरजसी । तयोस्सदसदन्यरूपतः मिथुनीकृतस-त्यानृतवागर्थरूपभेदात् रजोनाम भवतीति विग्रहः । एतेन अहन्तेदन्तयो र्वागर्थपरमाण्वोः रूपभेदमिश्रणे नियत्यपरपर्यायनामकलोपेतं रजोनाम गुणः । अभेदेन स्वस्वरूपैक्ये ब्रह्मात्मता च स्वरूपस्थित्यपरपर्यायेत्युक्तमिति वेदि-तव्यम् । अतएवात्र मनः प्राणवाचामेव गुणत्रयाहन्तामयशरीरत्वमभिस-न्धाय भावप्रकाशे प्रथमाधिकारे— "यत्सत्वपरिणामि स्याद्द्रव्यं तन्मन उच्यते । ईश्वरस्य च मुक्तानां तत्सङ्कल्पो भविष्यति ॥ संसारिणामहन्त्वेन परिणम्य प्रवर्तते । तत्सत्वपरिणामित्वात्सत्वमित्युच्यते बुधैः ॥ यद्रजः प-रिणामि स्याद्द्रव्यं स प्राण उच्यते । ईश्वरस्य च मुक्तानां क्रियाहेतु स्स रितः ॥ संसारिणां पुनरसौ प्राणाकारेण तिष्ठति । यत्तमः परिणामि

स्याद्द्रव्यं सा वागुदाहृता ॥ ईश्वरस्य च मुक्तानां सा वाग्भवति शोभना। संसारिणां परिणमेच्छब्दाकारेण सा पुनः ॥ उक्ता क्रोधादिभिर्भावैस्तत्फ-लाऽव्यभिचारिणी । या मुक्तेश्वरवागुक्ता सा वाणीत्युच्यते बुधैः ॥ रवि-स्सोमश्च वह्निश्च तस्य तस्य यथाक्रमम् । अधिष्ठातार इत्येषा व्यवस्था योगिभिः कृता ॥" इति 'सद्विद्याहमिदंधियोः' इति शुद्धविद्यास्वरूपे तन्त्रान्तरञ्च ॥ १६ ॥

एवं वागर्थयोरेव गुणत्रयसूक्ष्मरूपतां विविच्य भूतत्रयस्य गुणत्रयस्थू-लरूपतामाह—

यत्तमोऽन्यदिह तत्क्षि [ते] तिर्वपु
सत्वमन्यदिह तेजसश्शिवे ।
मिश्रणोत्थमितरद्रजः तयोः
त्वत्कसत्व (श) जमतो गुणत्रयम् ॥१७॥

यदित्यादिना । हेशिवे! मङ्गलरूपे 'वश् कान्तौ' इति धातोः वर्ण-व्यत्ययादिच्छारूपे इति वा सम्बुद्धिः । सप्तमी वा शिवाधिकरणविवक्षया । यत् अन्यत्तमः पूर्वोक्तसूक्ष्मरूपात् रूपान्तरं त्रिवृत्कृतस्थूलं तम इत्यर्थः । एव मुत्तरत्रापि । तत्क्षितेर्वपुर्भवति । क्षितिर्वपुरिति पाठे-- क्षितिरेव रू-पान्तरं तव तमश्शरीरमित्यर्थः । एवमन्यत् सत्वं सद्रूपस्थूलरूपं तेज-सो वपुर्भवति । तयोस्सत्वतमसोर्मिश्रणोत्थं इतरत् स्थूलं रज आप्या-नाप्यभूतस्य वपुर्भवतीत्यर्थः । एतेन पार्थिवतैजसोराग्नेयसौम्ययो श्च तम-स्सत्वयोर्मिश्रणोत्थस्य रजस आप्यानाप्यभूतसम्मेलनजन्यत्वोक्त्या क्षुत्पिपा-सधर्मकस्य तस्य शुक्रीयप्राणसूर्यमयपरमाणवशरीरस्यापि त्र्यणुकद्वयसम्मे-लनेन मध्यमपरिमाणमप्युक्तप्रायं वेदितव्यम् । एवं त्वत्कसत्वशमतः वागर्थ-रूपिण्यास्तव सत्वगुणशमधर्मात् । गुणत्रयं पूर्वोक्तविधिनिषेधोदासीनव्या-पारहेतुकं भवतीति शेषः । त्वत्कसत्वजमिति पाठे-- त्वदीयशुद्धसत्वगु-णजन्यमेव मिश्रजातीयवक्ष्यमाणलिङ्गत्रयहेतुकं गुणत्रयरूपमित्यर्थः । अत्रे-दमनुसन्धेयम् । एवं भूतत्रयस्य गुणत्रयस्थूलकार्यत्वनिरूपणेन जलभूतस्य

स्वकार्यकारणभूतक्षितितेजसोर्मध्यकेन्द्रे तनूनपादपांनपान्नामकमध्यामेध्य-सामरस्यरसात्मना । वाय्वाकाशसामरस्यस्थूलोपाधित्वमिव ममतापरपर्याय-रजोगुणस्यापि स्वकार्यकारणात्मकान्नमयानन्दकोशयोस्तमस्सत्वस्थूलरूपयो-र्मध्ये विद्याऽविद्यामयशाब्दार्थात्मकद्वयसमष्टिरूपविज्ञानमनःप्राणमयकोश-त्रितयसमष्ट्यां लिङ्गशब्दव्यवहार्यायां तत्रापि मध्यस्थितमानससरोवरराज-हंसात्मकमिथुनाश्रयेण च वीर्यवत्तरसूक्ष्मोपाधिरूपत्वमुन्नेयम् । अतएव ष-डध्वबोधकमातृकार्णमालायामपि मातृकाचक्रविवेकोक्तरीत्या स्वरखण्डस्य जडसुषुप्तिदशाबोधकत्वेपि चिन्मयषोडशसोमकलाबोधकतया सौम्यस्वयं-राजमानत्वधर्मेण स्वस्वरत्वखण्डत्वाक्षरत्वादिकं निर्वाच्यम् । तथा स्पर्शा-नां पञ्चेन्द्रियजडजाग्रद्दशाबोधकत्वेपि चिन्मयमुख्यप्राणसूर्यतुरीयजाग्रद्दशा-बोधकत्वेन चिन्मयस्पर्शबोधकत्वात् स्पर्शखण्डत्वादिकं च । तथाऽन्त-स्थोष्मापरपर्यायव्यापकवर्णखण्डस्यापि भूताग्नेरिव जाठराग्नेरपि भुक्तान्नपा-नादिजारणेनान्तर्मनःकल्पितविकल्पात्मकव्यावहारिकसंसारदाहकतयान्तर्मुख-विमर्शानलप्राधान्येनान्तस्थोष्मव्यापकखण्डत्वादिकं चेत्यादिगुरुमुखैकवेद्यम् । वाक्प्राणमनसां तेजोबन्नमयत्वं छान्दोग्योपनिषदि "अन्नमयं हि सोम्यम-नः आपोमयः प्राणः तेजोमयी वाक्" इत्यादिना सोपपत्तिकं वर्णितं तत्रैव द्रष्टव्यम् । एतेन मुख्यप्राणाग्नेरेव मण्डलत्रयरूपत्वं सूर्यचन्द्रयोस्त-दवयवजन्यत्वञ्च वक्ष्यमाणप्रकाशानन्दमूर्तिचक्रमयवागर्थदेवतास्वरूपवर्णनो-पोद्बलकं सूचितम् । तदप्युक्तं श्रुत्या "चन्द्रमा मनसो जातः । चक्षो-स्सूर्यो अजायत" इत्यादिकया । किञ्च चन्द्रस्य "यस्मा न्न जातः परो अ-न्यो अस्ति । य आविवेश भुवनानि विश्वा । प्रजापतिः प्रजया संविदानः। त्रीणि ज्योतीगुंषि सचते सषोडशी" इत्यादिमन्त्रोक्तसकलजगत्कारणषोड-शीकलारूपत्वं च । तथैव ज्योतिश्शास्त्रोक्ताऽऽप्यगोलस्य चन्द्रस्य भूम्युपग्रह-त्ववर्णनमुखेन कार्यरूपत्वं । तथा सूर्यस्यापि "अपागं रसमुदयगं सन्न्। सूर्ये शुक्रगं समाभृतम् । इमे वै लोका अपागं रसः । तेऽमुष्मिन्ना-दित्ये समाभृताः" तथा "आपो वा इदगं सर्वम्" इत्यादिमन्त्रब्राह्मणवाक्यपर्या-

लोचनेन "एकैकस्मिन्यथाऽदर्शे प्रासादो मुहुरन्तरः । सहितो दृश्यते देवेष्वेवं लोकस्सुरान्तरैः ॥ तस्मात्स्युर्देवतास्सर्वाः प्रत्येकं विश्वयोनयः । अन्योन्ययोनयश्चैव यथायास्कमुनीरितम् ॥ इत्युक्तसर्वभूतात्मभूतात्मभावेनैव सर्वेषां सर्वजगत्कारणत्वमित्यपि पर्यवस्यतीति दिक् ॥१७॥

एवं त्रिगुणमय्या वागर्थप्रकृतेर्भेदसृष्टिहेतुतां समुन्मील्य तस्या एव संसारात्मनापि परमैश्वर्यरूपतामाविष्करोति—

ईश्वरस्य तव भर्तुरक्षयै
श्वर्यरूपमसि तत्वमाम्बिके! ।
ज्ञानमस्य शुचि कर्म वा फलं
ते विरागमयपूर्णता फले ॥१८॥

ईश्वरस्येत्यादिना । हेअम्बिके! पूर्वश्लोकोक्तासम्पूर्णसत्वतमोंशमिश्रणवागर्थशरीरतया प्रादेशिकवागर्थशरीरात्मिके इत्यल्पवागर्थशरीरविवक्षया अम्बिके! इति सम्बुद्ध्यर्थः । उक्ताच "अम्बे! अम्बाल्यम्बिके" इत्यनुवाके अश्वमेधकाण्डे त्रिविधवागर्थशरीरा शक्तिरिति तत्रैव द्रष्टव्या । अतएव तव भर्तुरीश्वरस्य । बिभर्तीति भर्तेति विग्रहात्त्वत्पोषकस्यात्मन इत्यर्थः । त्वं पूर्वोक्तगुणत्रयस्थूलसूक्ष्मरूपिणी त्वमित्यर्थः । अक्षयैश्वर्यरूपं वाङ्मयशरीरे। आदिक्षान्तगणनया पुनरपि वैलोम्येन क्षादियान्तगणनया च वक्ष्यमाणज्ञानमन्त्रयोगशाक्तरश्मिसंज्ञकवृन्दचक्ररश्मीनां षष्टिसङ्ख्याकानां "त्रिषष्टि र्वा चतुष्षष्टिर्वर्णाश्शम्भुमते मताः" इति वक्ष्यमाणशाम्भववर्णरश्मिषु चतुर्विधशाम्भवरश्मिरहितानां लाभादक्षयैश्वर्यरूपत्वम् । वक्ष्यति चाग्रेपि "क्षान्तथादिकलिताक्षमालया" इत्यादिना खण्डचक्रवर्णनावसरे इममेवाशयम् । अर्थमयशरीरेतु । अहोरात्रात्मककालावयवषष्टिसङ्ख्याकघटिकाविघटिकातिथिवत्सरादिनवविधकालमानगणितस्वायम्भुवकालावयवरश्म्यादिजागतैश्वर्यभेदविवक्षया चाक्षयैश्वर्यरूपत्वं बोध्यमिति विवेकः । एवमुभयविधवागर्थाक्षयैश्वर्यरूपम् । तत् परोक्षत्वेन व्यवहार्यम् । त्वं अपरोक्षत्वेन युष्मत्प्र-

त्मयवागर्थव्यवहार्यं च । तत्त्वं त्वमेवासि । वागर्थसृष्ट्यादिकृत्यपञ्चकसंसारात्मनेति भावः । तदुक्तं तन्त्रालोके "सारमेतत्समस्तस्य यच्चित्सारं जडं जगत् । तदधीनप्रतिष्ठत्वात्संसारं हृदयं महत्" इति ।

ननु यदि भेदसृष्टिमयवागर्थसंसारस्यापि परमैश्वर्यरूपता, तर्हि तस्य "त्यागभोगफलं धनम्" इति न्यायेन धान्यपशुरत्नकनकरजतादिमानुषधनस्येव फलमपि वक्तव्यमित्याशङ्क्य फलमपि दर्शयति—ज्ञानमस्येति । अस्य वागर्थसंसारात्मकैश्वर्यस्य । शुचि परिशुद्धं ज्ञानं, कर्म वा फलं भवति । ज्ञानस्य पारिशुद्ध्यं अधीतिबोधात्मकत्वम् । कर्मणस्तु आचरणप्रचारणयोः फलानभिसन्धिरूपम् ।

तयोरपि फलमाह— ते विरागेति । ते परिशुद्धज्ञानकर्मणि । विरागमयपूर्णताफले । विरागमया विरागप्रचुरा । या पूर्णता पूर्णभावः । चिज्जडभेदभावराहित्येन वागर्थैकरूप्यसामरस्यमिति यावत् । सैव फलं ययोस्ते तथोक्ते भवितव्ये इति शेषः ॥१८॥

एवं सामान्येन वागर्थयोरक्षयैश्वर्यरूपतामुन्मील्य तत्रापि सूक्ष्मेक्षिकया औपनिषदयोरेव तयोश्शाक्तशैवयोरिव पूर्णभावसामरस्येन पुरुषार्थत्वद्योतनाय सत्वतमोगुणमयदेवतास्थूलरूपतां प्रत्येकतयापि सूचयति—

ज्योतिरम्ब! हृदि विद्ययेक्षितं
यल्लघुप्रसृतमर्थमण्डपे ।
धूमलक्ष्म गुरु यच्च तत् [च्यु] च तं
ते तु सत्वतमसी वपुस्तव ॥१९॥

ज्योतिरम्बेत्यादिना । हेअम्बेति सम्बुद्धिः पूर्ववत् । अर्थमण्डपे पञ्चेन्द्रियप्रवृत्तिगोचरपाञ्चभौतिकभूतपञ्चककृत्याद्यात्मके । लघुप्रसृतं यत् ज्योतिः "नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा । तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः । स ब्रह्म स शिवस्सहरिस्सेन्द्रस्सोऽक्षरः परमः स्वराट्" इति श्रुत्युक्तशिखारूपतया विभाव्यं यदात्मज्योतिः । सर्वदेवतामयं पूर्वोक्तद्वैरजोरूपं यदात्मज्ञानज्योतिरित्यर्थः । वक्ष्यति चाग्रेपि चतुर्थविमर्शे

"ज्योतिषाम्बशिखया स हन्यते पुंसि चैतसिकमुद्धतं तमः" इत्यादिना इदमेव ज्योतिरभिसन्धाय । तत् ज्योतिः । हृदि हृदयाकाशे । विदया "सत्तायां विद्यते ज्ञाने वेत्ति विंते विचारणे । विन्दते विन्दति प्राप्तौ" इत्युक्तयावद्विदिलृधातुप्रत्ययप्रातिपदिकार्थरूपया । अपरोक्षसाक्षात्कारवृत्त्येति यावत् । ईक्षितं साक्षात्कृतं "स ईक्षत लोकान्नु सृजा इति" इत्युक्तसञ्जातेक्षणव्यापारवत्कृतं च यत् ज्ञानमयम् । यच्च कर्ममयं ज्योतिः । धूमलक्ष्म । धूमस्य लक्ष्मेव लक्ष्म यस्य तत् "धूमो भूत्वा ऽभ्रं भवति" "धूमध्वजं लोहिताक्षं" इत्यादिश्रुतिस्मृतिभ्यां गूढाभिसन्धिद्योतितातीन्द्रियवैदिकक्रियामयं, तत्फलकृतिकर्तृभोक्तृरूपं च । अतएव च्युतं सत् गुरु । निस्सारत्वज्ञानोत्तरं स्वयमेव गलितम् । लोकसंग्रहार्थत्वेन लोकगुरुरूपं, श्रेष्ठं च वा । धूम एव लक्ष्म यस्य तदिति क्रियाविग्रहव्युत्पत्त्या पूर्वोक्तज्योतिर्मयज्ञानरूपापेक्षया स्थूलरूपं चेति वा "गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे" इत्यमरः । तच्च तमिति पाठे- तमित्युद्देशप्राधान्यात्पुंस्त्वम् । पुं रूपं तमर्थमण्डपम् । ते पूर्वोक्ते ज्ञानकर्मणी सत्वतमसी तव वपुः शरीरं सत् प्रसृतमिति हृदि विदयेक्षितमिति पूर्वेणान्वयः ।

एतेन वैदिकज्ञानकर्ममयं वपुस्तव त्वदीयभर्तुः पुरुषस्य चार्थमण्डपात्मकस्य सममेव प्रसृतमिति वेदनमेव पूर्णाहन्तामयं पूर्णभावविद्याफलमिति तात्पर्यार्थः । तदेतदुक्तं श्रुत्यापि "कश्चिद्वा अस्माल्लोकात्प्रेत्य । आत्मनं वेद । अयमहमस्मीति । कश्चित्स्वं लोकं न प्रतिप्रजानाति । अग्निमुग्धोहैव धूमतान्तः । स्वं लोकं न प्रतिप्रजानाति । अथ योहैवैतमग्निगं सावित्रं वेद । स एवास्माल्लोकात्प्रेत्य । आत्मानं वेद । अयमहमस्मीति । स स्वं लोकं प्रतिप्रजानाति" इत्यादिसावित्राग्निब्रह्मविद्याप्रकरणस्थया । एतेन वागर्थयोरिव ज्ञानकर्मणोरपि प्रातिस्विकप्रधानाङ्गभावेन सत्वतमोमयशरीरतापि वेदितव्या विचित्रवासनाभेदबलादित्यपि समुदायतात्पर्यार्थः ॥१९॥

एवं वागर्थरूपयोः वैदिकज्ञानकर्मणोरेव वैदिकसाङ्ख्ययोगमयभिन्नप्रस्थानवागर्थत्रिपुटीभेदप्रख्यापनेन षडध्वगुर्वैघषट्कतारूपं फलैक्यमपि द-

शंयति—

त्वं (हि) तु रुद्रजकटाक्षवर्तिनी
जायमानमवलोक्य चण्डिके ।
सांख्ययोगपथदेशिकद्वयं
जातसम्मति (समाधिकं) समीप्सितं यथा ॥२०॥

त्वं हीत्यादिना । हेचण्डिके! 'चडि कोपे' इति धातोः स्वरूपेतरे क्रोधमयिदेवीति साभिप्रायसम्बुद्धिः । त्वं । अस्मद्वागर्थप्रत्ययप्रतियोगिनी त्वमित्यर्थः । हि यस्मात् । सांख्ययोगपथदेशिकद्वयम् । सांख्ययोगपथावेत्र पथयोर्वा देशिकौ । तयोर्द्वयं प्रातिस्विकत्वागर्थप्रधानौ प्रवृत्तिनिवृत्तिवाङ्मयविद्यामार्गौ । पूर्वोक्तजीवेश्वरस्रोतोभेदेन "अधीतिबोधाचरणप्रचारणैर्दशाश्चतस्रः प्रणयन्नुपाधिभिः । चतुर्दशत्वं कृतवान्कुतस्स्वयं न वेद्मि विद्यासु चतुर्दश स्वयम्" इति श्रीहर्षोक्तौ तयोर्द्वयं नैषधीयविद्यासु संख्यादशामयधर्मद्वयवदाभासमानविरोधमार्गद्वयरूपम् । तदुपदेष्टृगुरुद्वयरूपं वेत्यर्थः । कर्मणि तु श्रौतवागर्थमये । प्रवृत्तिनिवृत्तिभेदेन ज्ञानयोगमार्गद्वयं तदुपदेष्टृगुरुद्वयं वेत्यर्थः । जायमानं जनिमापद्यमानमवलोक्य । रुद्रजकटाक्षवर्तिनी— रुद्रजः षड्तुषण्मुखादिरूपः । तं वर्तयसि सांख्ययोगपथदेशिकद्वयं प्रति प्रवर्तयसि । देशिकद्वयस्य प्रवृत्तये निवृत्तये त्वं वा प्रवर्तसे इति रुद्रजकटाक्षवर्तिनी । मार्गद्वयसंहाराभिसन्धिना रुद्रजकटाक्षे प्रकृतिरूपिणी त्वं वा वर्तसे इति वा रुद्रजकटाक्षवर्तिनी भवसीत्यर्थः । तस्मात्त्वत्सांख्ययोगपथदेशिकद्वयम् । जातसम्मतिसमाधिकं- सम्मतिः सम्यग्ज्ञानं, समाधिः यथावदनुष्ठानम् । ते जाते यस्य तत् जातसम्मतिसमाधिकम् । जायमानमवलोक्यैव । सृष्टिसंहारापरपर्यायप्रवृत्तिनिवृत्तिमयप्रकृतिस्वाभाव्येन रुद्रजकटाक्षवर्तिनी भवसि । 'त्वं तु रुद्रजकटाक्षवर्तिनी' 'जातसम्मतिसमीप्सितं यथा', इति पाठद्वये पूर्वश्लोकोक्ताक्षयपारमैश्वर्यरूपिणी त्वं तु रुद्रजकटाक्षवर्तिनी । कथम्? पूर्वोक्तसांख्ययोगपथदेशिकद्वयमन्योन्यसामरस्येन जातसम्मति । अतएव समी-

प्सितं यथा तथा इच्छानुरूप्येण जायमानमवलोक्यैव त्वं रुद्रजकटाक्षवर्तिनी भवसीत्यर्थः । उभयथापि वैदिकसांख्ययोगयोः फलैक्यं त्वदीयरुद्रजकटाक्षवर्तनेन तत्समाधानयुतेन त्वत्समाधानयुततज्जन्मना वा सूचितमिति भावः । अतएव गीतासु भगवानपि "साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः । एकमप्यास्थितस्सम्यगुभयोर्विन्दते फलम्" इत्यादिना सम्यगास्थानेनास्थापनेन च फलैक्यमुपदिदेश ॥२०॥

एवं साङ्ख्ययोगपथापरपर्यायवैदिकवागर्थस्थानीययोः ज्ञानकर्मणो राभासमानविरोधपरिहारेण फलैक्यं प्रदर्श्य तयोरेव पूर्णिमाऽमारूपेण वैदिकीं प्रतिलोमानुलोमसृष्टिसंहारहेतुतां च वर्णयन् प्रबन्धप्रमेयं चापि सूत्रयति-

**स्व [स] प्रकाशकृतमज्जनं जग**
**त्कुर्वती भवति पूर्णिमा शिवे ।**
**पूर्णमेव तव रूपमन्यथा**
**कुर्वती किल कूहूः प्रतीयसे ॥२१॥**

**स्व (स) प्रकाशमित्यादिना** । हेभवति । पूर्वोक्तसत्वतमांशसम्मेलनात्मकरजश्शरीरेण भूशब्दार्थव्यावहारिकज्ञानक्रियाप्रधानशिवसंसारात्मिके इति सम्बुद्ध्यर्थः । शिवे! मङ्गलरूपे! कालशिवे जीवशिवे वा । सप्रकाशकृतमज्जनं-सप्रकाशं प्रकाशसहितं यथातथा । कृतमज्जनं कृतावभृथं, कृताभ्यङ्गस्नानं च, स्वप्रकाशकृतमज्जनमिति पाठे-स्वरूपप्रकाशे कृतमज्जनमित्यर्थः । जगत्कुर्वतीसती पूर्णिमा । वागर्थमयविद्याप्रपंचे साङ्ख्ययोगमार्गद्वयात्मके कृत्यपञ्चकात्मके वा । जगति 'अकुहविसर्जनीयानां कण्ठः' इत्यादिस्वरवर्णोत्पत्तिस्थानप्रयत्नाद्युन्मेषपूर्वकं वागर्थयोः, तदीयज्ञानकर्मणोर्वा तत्तदनुकूलस्वरवर्णाद्यावापोद्वापज्ञानक्रियाकृत्यपञ्चकाद्युन्मेषक्रमेण, वागर्थादिकृत्यपंचकस्वरूपं, तदीयपूर्णरूपं च प्रकाशयन्ती पूर्णिमेत्यर्थ । एवं कालक्रमेपि एवं पूर्णमेव तव रूपम् । अन्यथाकुर्वती आविद्यकक्रामदोहनेन।पूर्णतयान्तर्हितं कुर्वती । कुहूः किल प्रतीयसे । अत्र प्रतीयस इत्यनेन माहेश्वरनारायणीयस्वायम्भुवादिभेदभिन्नायां वक्ष्यमाणलक्षणमातृकार्णमालायां

तुरीयविमर्शे वक्ष्यमाणगुप्तभाषितजगद्विजृम्भणेन हादिकादिविद्ययोरङ्जला-द्यनुलोमप्रतिलोमखण्डप्रत्याहारभेदेन विद्याऽविद्याकृताहमात्मकेऽकामाहमात्म-के चानुलोमप्रत्याहारपक्षद्वयस्वरूपे हकारककारये.गोपनेनामानामकलास्फुर-णवत्तत्रैव क्रमप्रतिनिवर्तनेन, सकारहकारादिशाक्तशाम्भवविसर्गपूर्णानुस्वारान्तं विलोमप्रत्याहारेण विजहत्क्रमे सोहमात्मके हंसोहमात्मके च वा क्रमेण हकारमात्रगोपने सोमेति हल्वर्णयो हंसकारयोर्द्वयोर्गोपने ओमिति च पूर्णसोमनामकलास्वरूपप्रतीतेः । पूर्णरूपस्यैव पञ्चदशकलामयस्वावयवगो-पनेनान्यथाकरणे । कः स्रष्टा प्रजापतिर्हूयते संहारक्रियामुखेन चिन्म-यप्राणसूर्यमूर्तौ, आहूयते वा सृष्ट्यर्थमपानसोममण्डले अनयेति व्युत्पत्त्या वक्ष्यमाणलक्षणा, सृष्टिसंहारादिकालसङ्कर्षिणीपर्यन्ता, महाकालशक्तिः कु-हूशब्देन प्रतीयत इति रहस्यम् । अतएव वैतानिकवैदिक्यामुपासनायां दार्शिकवेदीप्रभृतिसौमिकवेदीपर्यन्तवेदीवास्तुकल्पेषु, निमेषकलाकाष्ठाप्रभृति त्रिंशन्मुहूर्ताहोरात्रादिसावनमासवर्षान्तकालकल्पेषु च, दिग्देशकालत्रिपुटी-षडध्वमयेष्विव स्वरनादवर्णत्रिपुटीषडध्वमये, कलामातृकावेदीकल्पेपि "त्रि-गूंशत्पदानि पश्चात्तिरश्ची भवति षट्त्रिगूंशत्प्राची चतुर्विगूंशतिः पुरस्ता-त्तिरश्ची दश दश सम्पद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव-रुन्धे" इत्यादिना तैत्तिरीयसंहितायां षष्ठकाण्डे द्वितीयप्रपाठकतृतीयानुवा-कोक्तप्रतिपदविराट्सम्पत्तिवदेव प्रतिवर्णविराट्सम्पत्त्यापि सकलान्नावरोधनफ-लावाप्तयेऽनुत्तराकारविसर्गाद्यन्तस्थवर्णपरामर्शपर्यन्तं प्रतीचीनत्रिंशद्वर्णपदस-म्मितेन तिर्यक्स्रोतसा, सोष्मकूटार्णपर्यन्तं षट्त्रिंशतावर्णैः प्राचीनोर्ध्वस्रो-तसा। पुनरनुत्तरविसर्गादिस्पर्शान्तेषु षड्विंशतिवर्णेषु चाद्यन्तवर्णप्रत्याहारेणा-हमा संदंशितचतुर्विंशतिवर्णतत्त्वगर्भितेनच, प्राचीनतिर्यक्स्रोतसाच यथाक्रमं "वः,वह, अक्षं, : मा,अहमा,वहाक्षमहमा" इत्याद्याकारेण साङ्केतिकवैदिकसा-ङ्ख्यवर्णप्रत्याहारैरन्तर्निमेषसादाशिवात्मसम्पद्बोधकंच महावाक्यमखण्डमुपदि-श्यत इत्यादिगुप्तिभाषितजगद्विजृम्भणात्मसम्पदुद्घाटनकलापाण्डित्येन वैदि-कैस्तान्त्रिकैर्वा महोपासकैर्विमर्शकधौरेयैश्च नादवागर्थषडध्वादिवैराजात्मस-

म्पद्दुद्घाटनमुन्नेयम् । वक्ष्यति च कविरपि तुरीये विमर्शे "सत्सुधाब्धिशशभृत्कलान्तरी गर्भषोडशकलाब्जविष्टरम् । प्रेतमुज्झितगमागमं शिवे! स्मेरहृच्छिरसिजं त्वमाश्रिता" इत्यादिनानुत्तराकारविसर्गगर्भितषोडशस्वरकदम्बके षट्त्रिंशन्मातृकार्णमयहृच्छिरोजपङ्कजद्वये स्वरूपमात्रविश्रान्तां, अन्तर्निमेषयोगनिद्रापन्नां, सादाशिवपञ्चमप्रेतमञ्चफलकात्मिकां अनुत्तराकारात्मसम्पदमित्यादिगूढाभिसन्धिगर्भितः किलेत्यविद्याप्रधाने धूममार्गे पारोक्ष्यार्थकः । विद्याप्रधानार्चिर्मार्गेऽलीकार्थश्च निपातः । वस्तुतस्तु प्रत्यक्परावागर्थज्ञानक्रियासंसारयोः द्वयोरपि विद्याविद्याकृत्यपञ्चकप्रधानयोरनुलोमप्रतिलोमक्रमाक्रमकालशक्त्योः कालसङ्कर्षिणीरूपत्वेन बहिरन्तश्च कालपुरुषशक्तिसंज्ञामात्रभेदेन दृश्यमानत्वात्कालालीकताबोधकः किलेति निपातः । एतदेव कालसङ्कर्षिण्याः कालसङ्कर्षिणीत्वं यत्स्वस्वरूपएव भेदप्रदर्शनं, तथानुलोमप्रतिलोमकृत्यपञ्चकहेतुत्वप्रदर्शनं च । तदेतत्सर्वं तैत्तिरीयशाखायां तृतीयकाण्डे पञ्चमप्रश्ने प्रथमानुवाके दर्शपूर्णमासेष्ट्यारम्भप्रस्तावे "य एनयोरनुलोमं च प्रतिलोमं च विद्यादित्यमावास्याया ऊर्ध्वं तदनुलोमं पौर्णमास्यै प्रतीचीनं तत्प्रतिलोमं यत्पौर्णमासीं पूर्वामालभेत प्रतिलोममेनावालभेतामुमपक्षीयमाणमन्वपक्षीयेत सारस्वतौ होमौ पुरस्ताज्जुहुयादमावास्या वै सरस्वत्यनुलोममेवैनावालभतेऽमुमाप्यायमानमन्वाप्यायते" इत्यादिना प्रदर्शितम् । ज्ञानक्रियाकृत्यपञ्चकमेव परस्परविरुद्धमिव स्थितम् । वैदिकसाङ्ख्ययोगमार्गद्वयानुबद्ध मनुलोमप्रतिलोमकृत्यपञ्चकात्मकं चेति वस्तुगतिरिति संक्षेपः ॥२१॥

एतदेव कालपुरुषत्रिपुटीशक्तिद्वयात्मकमध्वषट्कं पूर्वोक्तगुणत्रयगुणितं, "अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कलाः" इत्युक्तकाष्ठाकलाप्रभृति "ब्राह्मं दिव्यं तथा पित्र्यं प्राजापत्यं गुरोस्तथा । सौरं च सावनं चान्द्रमार्क्षं मानानि वै नव" इत्युक्तनवविधकालमानात्मककालपुरुषमहामानश्रीचक्रेपि पूर्वश्लोकसूचितपितृमानप्रभृति दिव्यप्राजापत्यब्राह्मनामकशैवचतुष्कोणात्मना चतुर्विधपारमार्थिककालमानगणितसामरस्येनापि कर्मोपासनो-

पयोगितया विद्याऽविद्याक्रमाक्रमात्मकं "सर्गसंहृतिशरीरयोर्द्वयोः" इत्यदिना वक्ष्यमाणसृष्टिसंहाराद्यर्थक्रमभेद मुपदर्शयन् सूत्रप्रायमादिमं विमर्शार्थ-मुपसंहरति—

पूर्णताकृशतयोर्यदन्तरं
तत्र कालि विजत्क्रमे स्थिता ।
दर्शितक्रमविभागसम्भ्रमं
कालमद्यतनमत्तु मीह(से)ते ॥२२॥

इति श्रीमहाकवि कालिदासकृतौ चिद्गगनचन्द्रिकायां,
प्रथमविमर्शः समाप्तः ॥

पूर्णताकृशतयोरित्यादिना— पूर्णताकृशतयोर्यदन्तरं पूर्णावस्थाकृशा-वस्थयोः, पूर्णरूपत्वकृशरूपत्वयोश्च यो मध्यभागः । विद्याऽविद्यावस्थयोः यौवनवार्धक्यप्रादुर्भावरूपः पुरुषदशासन्धितुल्यः कालदशासन्धिरित्यर्थः । कालक्रमे-शुक्लकृष्णाष्टमीप्रदोषात्मककालसंधिभागश्च । विजहत्क्रमे- विजहत् क्रमः प्रकाशसृष्टिक्रमः विमर्शसंहारक्रमश्च यस्मिन् विद्यावस्थायौवनप्रादु-र्भावविनाशान्यतरे काले, अविद्यावस्थावार्धक्यप्रादुर्भावविनाशान्यतरे वा । तथा कालक्रमेपि–विजहत् चन्द्रिकामयसृष्टिप्रकाशक्रमः तमिस्रामयसंहारक्र-मश्च यस्मिन् राकाकुहूनामकपूर्णिमाऽमावास्यातिथिप्रादुर्भावसंधिकाले च त-स्मिन् । विद्यायौवनप्रादुर्भावाऽविद्यायौवनविनाशान्यतरावस्थातुल्यशुक्लाष्टमीसं-धिभागे, अविद्यायौवनप्रादुर्भावविद्यायौवनविनाशतुल्यकृष्णाष्टमीसंधिभागे च तदुभयपूर्णराकापूर्णिमाकुहूनामकाऽमातिथ्योश्च क्रमेणयथाधिकारंयथायोग्यंच विषये अधिकरणेच स्थिता सती । एवं । दर्शितक्रमविभागसम्भ्रमं– दर्शितः प्रकाशितः यः क्रमविभागः विद्याविद्यासृष्टिसंहारक्रमविभागः तस्य सम्भ्रमश्च यस्मिन्विद्यासृष्टिसंहारसंधिकाले, अविद्यासंहारसृष्टिकालेवा तं दर्शितक्रमविभा-गसम्भ्रमं । तथाविधमद्यतनं अद्यते भक्ष्यते विद्याविद्यादिसंसारः तन्यते चेति व्युत्पत्त्या । असम्पूर्णविद्याविद्यासृष्टिसंहाराद्यात्मकं व्यावहारिकं कालमित्यर्थः । अत्तुं भक्षितुं ईहसे इच्छसि । कालपदे दर्शितक्रमविभागसम्भ्रमं– दर्शि-

तः प्रकाशितः, "दर्शा दृष्टा दर्शता विश्वरूपा सुदर्शना" इत्यादिकाठक-श्रुत्या सञ्जातदर्शो वा कृतः । क्रमविभागः पित्र्यदिव्यादिरात्र्यहर्मुखस-न्धिरूपः । शुक्लाष्टमीमारभ्य कृष्णाष्टमीपर्यन्तं, तदादि पुनः शुक्लाष्टमी-पर्यन्तं च प्रकाशितः यः पित्र्यरात्र्यहस्सन्धिकालरूपः दिव्याहोरात्रस-न्धिकालरूपो वा क्रमविभागस्य सम्भ्रमो यस्मिन्तमद्यतनं कालं शुक्लकृ-ष्णपक्षात्मकं तत्तत्पक्षसन्धिरूपमात्यन्तिकतया भक्षणयोग्यं दिव्यप्राजापत्य-ब्राह्मादिमानसिद्धं च कालमत्तुं भक्षितुमीहस इति च । ईहत इति पाठे-पूर्णताकृशतयोरन्तरमेव कर्तृपदं ज्ञेयम् । शुक्लाष्टम्याः "अष्टमीचन्द्रवि-भ्राजदलिकस्थलशोभिता" इत्युक्तसृष्टिकालीरूपिण्याश्शुद्धविद्यात्रिपुरसुन्दर्याः मुखावयवचन्द्राधिष्ठानककालान्तरालरूपत्वात्, तथा कृष्णाष्टम्या अपि पितृव्यवहारारम्भसूर्योदयकालत्वेन सूर्योदयेन शार्वरतमोविनाशवत्कृष्णाष्ट-म्यारम्भे शुक्लपक्षीयपैतृकतमोविनाशस्य कृतत्वेन निष्प्रत्यूहं संहारकाली-विभूतिमयश्राद्धादिपैतृकव्यवहारस्य सम्प्रवृत्तत्वाच्च पूर्णताकृशतयोरन्तराल-रूपत्वेन कर्तृत्वं पितृरात्र्यहस्सन्धिरूपयोः शुक्लकृष्णाष्टम्योरिति भावः । त-दुक्तं मात्स्ये मानुषपित्र्यादिकालमानगणनाप्रस्तावे– "अहोरात्रैर्विभजते सू-र्यो मानुषलौकिकः । रात्रिस्स्वप्नाय भूतानां चेष्टायै कर्मणामहः । पि-त्र्ये रात्र्यहनी मासः प्रविभागस्तयोः पुनः ॥ कृष्णपक्षस्त्वहस्तेषां शुक्ल-स्स्वप्नाय शर्वरी । त्रिंशत् द्वे मानुषा मासाः पितृमासस्स उच्यते ॥ शता-नि त्रीणि मासानां षष्ट्याचाभ्यधिकानि तु । पित्र्यस्संवत्सरो ह्येष मानु-षेण विभाव्यते ॥ मानुषेणैव मानेन वर्षाणां यच्छतं भवेत् । पितॄणां तानि वर्षाणि सङ्ख्यातानि तु त्रीणि वै ॥ दश चैवाधिका मासाः पि-तृसङ्ख्येह कीर्तिता" इत्यादिना ब्राह्ममानान्तकालमानगणनासंक्षेपेण दर्शि-ता तत्रैव द्रष्टव्या । अतएव कृष्णाष्टम्याः पञ्चपर्वसु गणनं दर्शे श्राद्ध-विधानं चेत्यादि कर्मोपासनाकाण्डोक्तं सर्वं सोपपत्तिकमस्मिन्नेवार्थे । एव मेव पूर्णापूर्णदिनान्तरगुणितकालमानसङ्ख्याश्रयेण "एकं वा एतद्देवानामहः। यत्संवत्सरः" इत्याश्वमेधिकश्रुत्युक्तलक्षणे देवमाने "महायुगो वास्तवसौर-

त्वर्षः" इत्युक्तवास्तवसौरमानापरपर्यायप्राजापत्यमाने "चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते" इत्युक्तब्राह्मकल्पमाने चायमेव श्लोकः क्रमेणोन्मेषनिमिषोत्पन्नविपन्नभुवनावलिरूपपरशिवशक्ति मिथुनात्मकपरवासुदेवमानपर्यन्ततया खगोलकालपरिभ्रमणतारतम्यपरिज्ञानेन परमात्मतत्वे समन्वेतव्यः । तत्तु ग्रन्थविस्तरभयाद्विरम्यत इति शिवम् ॥

श्लो ॥ सूत्रप्रायेऽत्र पुरतो विमर्शे प्रथमे बुधैः । चिदग्निचन्द्रिकाभाष्या व्याख्या दिव्यचकोरिका ॥ धनदानन्दनाथेन कृता सर्वार्थसिद्धिदा । विचेया स्वमहामातृप्रमातृयुगलात्मता ॥२॥ ये पूरणात्पुरुषतामुपसेदिवांसः ते गौरवीं समुपसद्य सम (र्थ्ये) चर्य मूर्तिम् । प्रौढान्तरुल्लसनदिव्यदशावलोकमुद्घाटयन्तु यदि मां सुदिदृक्षवः स्युः ॥३॥ येप्याणवादिमलशुद्धिमवापुरुच्चैर्यै मान्त्रवीर्यविभुतां कलिदासतां वा । प्रौढान्तरोल्लसनदिव्यचकोरिकां चेदालोकयन्ति त इमां सुदिदृक्षवः स्युः ॥४॥ धनदानन्दनाधीयं नवधाऽन्यविवर्जितम् । स्वात्मीयं धनमित्येव सर्वैस्समुप (यु) भुज्यताम् ॥५॥ पाश्चात्यानामिवाङ्कनां गतिस्स्यां वामतो मता । अक्षराणामिवास्माकं प्राचीना दक्षिणा गतिः ॥६॥ सव्यापसव्यमार्गस्थौ प्राक्प्रत्यग्दिग्निवासिनौ । सवो याग इति प्रोक्तः प्राचीना जीविकाहि सा ॥७॥ अपस (श) व्यो ह्ययज्ञः स्यात्सैव पाश्चात्यजीविका । वैदिको दक्षिणो मार्गो वाममार्गस्तु यावनः ॥८॥ कौलस्यात्तत्सामरस्यं कुलधर्मो हि दक्षिणः । तस्मात्स्वधर्मनिष्ठानां भुक्तिमुक्ती करस्थिते ॥९॥ सुगुप्तमेतद्रहसि श्रुतीनां मूर्धसु स्थितम् । तदेतत्सर्वसिद्धान्तसामरस्यं कवेर्मतम् ॥१०॥ एतद्धि कालिकास्तोत्रछद्मना हृदयं कवेः । विव्रीयते मयापीह तत्तं परशुमालभे ॥११॥ इत्यादिमे सूत्रसमे प्रतिज्ञापि तथाविधा । प्रमाणमत्र तत्सूत्रस्रोतस्स्वच्छन्दचारिणः ॥१२॥

इति श्रीधनदानन्दनाथदीक्षानामशालिकर्रान्वयाग्निहोत्रशर्मकृतौ चिद्गगनचन्द्रिकाव्याख्याने दिव्यचकोरिकाख्याने सूत्रप्राय आदिमो विमर्शः ।
श्रीकामाक्ष्यम्बानन्दानन्दनाथपरशिवशक्तिचरणयुगलार्पणमस्तु । श्रीश्रीश्री ॥

श्रीः।

परदेवतायै नमः।

# चिद्गगनचन्द्रिका॥

'दिव्यचकोरिकया' समलंकृता।

## द्वितीयविमर्शः।

एवं सूत्रप्रायप्रथमविमर्शग्रन्थसन्दर्भेण नादनाधनवकसमष्ट्यात्मकवागर्थस्वरूपस्य साङ्ख्ययोगमार्गद्वयसामरस्यपूर्वकं कालशक्त्यभेदेनैक्यं सम्पाद्य, तत्र "याहमित्युदितवाक्" इत्यादिना पूर्वोक्ताऽऽहतानाहतवागर्थसृष्ट्यादिकृत्यपञ्चकक्रमोपयुक्तवर्णपदमन्त्रात्मकशाब्दाध्वत्रिकस्य कलातत्त्वभुवनात्मकार्थाध्वत्रिकस्य च मूलभूते, बैन्दववैसर्गिकवक्ष्यमाणषड्विधपरामर्शात्मकपरापरस्थूलसूक्ष्मनादब्रह्मतत्त्वविवर्तभूते, षोडशकलषोडशस्वरखण्डात्मकपरापराविद्यासामरस्यमयविश्वविद्याशरीरे शाक्तानुत्तरविसर्गविवर्तनामकलां, शाम्भवानुत्तरविसर्गरूपकलां च मण्डलत्रयाभिन्नबिन्दुत्रयकामकलात्मकतया अवशिष्टचतुर्दशरूपसमष्टिकलामयीं, चतुर्दशमानवस्वरविभूतिं माहेश्वरचतुर्दशसूत्रादिचतुर्दशसङ्ख्याकविद्याभुवनादिवागर्थविवर्ततया परिणतां चाभिसन्धाय तत्रापि "द्वे विद्ये वेदितव्ये परा चाऽपरा च" इत्युक्ताऽपराविद्याप्रपञ्चे षड्विधबौद्धदर्शनेष्वतिस्थूलचार्वाकक्षपणकमाध्यमिकाद्यवैदिकमतानि प्रसङ्गेनाग्रे निराकरिष्यन्नादौ वैदिकरामानुजपूर्णप्रज्ञाद्यर्थाध्वभेददर्शनेष्वपि मातृमानमेयात्मकत्रिपुटीविकल्पबुद्धेरर्थात्मनि आत्मार्थे वा वाङ्मात्रकल्पिततया तया स्वस्वरूपनादमयीं वाग्देवतामकलङ्कितत्वविमर्शेन स्वार्थप्रपंचं साक्षात्कुर्वतोपि विदुषो नित्यमुक्ततामादौ प्रतिजानीते— मातृमेयेत्यादिश्लोकद्वयेन—

मातृमेयमितिसाधनात्मिका
त्वत्कृतोन्मिषति या विकल्पधीः।
त्वत्स्वरूपमकलंकितं तया
कस्य देवि! विदुषो न मुक्तता ॥२३॥

मातृमेयेति । हेदेवि! "दिवु क्रीडा विजिगीषाद्युतिव्यवहारस्तुतिमोदमदस्वप्नकान्तिगतिषु" इति धातुपाठात् क्रीडादिप्रयोजकवागर्थरूपिणीति साभिप्रायसम्बुद्धिः । मातृमेयमितिसाधनात्मिका--मातृसाधनमन्तःकरणम् । मेयसाधनानि कर्मज्ञानेन्द्रियगोलकानि स्थूलानि । मितिसाधनानि सूक्ष्माणीन्द्रियाणि तद्वृत्तयो वा व्यावहारिकाः । तान्येवात्मस्वरूपं यस्या विकल्पधियः सा तथोक्ता । तेषामात्मरूपिणी वा । या विकल्पधीः विलक्षणकल्पधीर्वा विगतकल्पधीर्वा । "रोगैश्च क्षयितो देहः कल्प इत्यभिधीयते" इत्युक्तदेहात्मभेदबुद्धिरिति यावत् । त्वत्कृता वागर्थरूपिण्यां त्वय्येव त्वया निर्मिता । उन्मिषति बहिरपि प्रकाशते । तया विकल्पधिया । त्वत्स्वरूपं वागर्थमहासरस्वत्यास्तव स्वरनादयुगलस्वरूपं प्राकृतं स्वरूपमयमिति भावः । अकलङ्कितमिति विदुषः वेदितुः । कस्य सिद्धस्य साधकस्यवेति भावः । न मुक्तता? प्रमात्रादित्रिपुटीसाधनात्मिका भेदबुद्धिः वागर्थकलाकालशक्तिकल्पितैवोन्मिषति । कल्पितत्वादेवाधिष्ठानास्पर्शिनीच । तस्मादसङ्कचित्स्वभावं महापरानन्दनादनाधात्मकमात्मतत्त्वं न कलङ्कयतीति विद्वान्विमर्शको वा सर्वोऽपि नित्यमुक्तएवेति भावः । एतेन मातृप्रमातृत्रिपुट्योर्व्यावहारिकपारमार्थिकभेदः मातृत्रिपुट्याः प्रमाणांशगार्भितत्वं च विवक्षितमिति बोध्यम् ॥१-२३॥

एवं प्राकृतत्रिपुटीविकल्पबुद्धेरपि प्राकृतस्वरूपाकलङ्ककारितां प्रतिज्ञाय तत्स्वरूपविमर्शकस्यापि तदुभयमध्यकेन्द्रस्थित्या विद्याऽविद्याकुलधर्ममुख्यपीठभूतायाः त्रिपुटीविकल्पबुद्धेः विमर्शप्रकारं लक्षयति—

अक्रमक्रमविमर्शलक्षणं
या क्रमाक्रममयी क्रमाक्रमम् ।
अक्रमं शिवमवेक्ष्य मध्यगं
त्वां च सत्कुलमिदं तवा (न] सनम् ॥२४॥

अक्रमेत्यादिना । या क्रमाक्रममयी-- क्रमः वक्ष्यमाणलक्षणः कादिमतसिद्धो वर्णमातृकार्णलक्षणः । अक्रमः हादिविद्यामतसिद्धः स्वरनाद-

मातृकाक्रम इति । तदुभयमयीति मातृकाशब्दविकल्पबुद्धेः विशेषणम् । अर्थमातृकाविकल्पबुद्धिपक्षे तु-- "गुर्वायत्तं क्रमज्ञानमाज्ञासिद्धिकरं परम् । क्रमज्ञानान्महादेवि! त्रैलोक्यं कवलीकृतम् ॥ क्रकारः क्रोधरूपस्तु मकारो मङ्गलप्रदः । क्रोधे तु मङ्गलं कुर्यात्क्रमः कालक्रमो भवेत् ॥" इति तन्त्रान्तरोक्तलक्षणगुरुमुखैकवेद्यक्रमाक्रममयी विकल्पबुद्धिरित्यर्थः । अक्रमक्रमविमर्शलक्षणं-- अक्रमविमर्शः वक्ष्यमाणलक्षणस्वरनादमातृकायाः सृष्टिलक्षणः । क्रमविमर्शः वर्णमातृकाया नादसंहारलक्षणश्च । तदुभयलक्षणं । तथैव क्रमाक्रमं पूर्वोक्तवर्णस्वरनादमातृकावागर्थक्रमाक्रमलक्षणम् । अतएवाक्रमं-- न क्रमतेऽप्रतिहतगत्या न प्राप्नोतीत्यक्रमम् । अतएव मध्यगं शिवजीवसंसारमध्यगतम् । शिवं साधकशिवम् । त्वां तथाविधामेव त्वां च । सत्कुलं-- सतां व्यवहारसत्यरूपाणां मातृमानमेयत्रिपुटीनाक्षत्रकिरणानां कुलम् । यद्वा, "त्रिवृद्वै ज्यैष्ठ्यं । माता पिता पुत्रः । त्रिवृत्प्रजननं । उपस्थो योनिर्मध्यमा । प्रयशो ज्यैष्ठ्यमाप्नोति" इति नाचिकेताग्निचयनब्रह्मविद्याप्रकरणे श्रुत्युक्तत्रिवृज्जगत्सृष्ट्यादिकारणस्वस्वरूपज्येष्ठांशानां वा, ब्रह्मक्षत्रवैश्यशब्दितत्रैवर्णिकभावशरीराणां वा, द्रव्यगुणक्रियात्मना जातिक्रियाद्रव्यरूपेण वा घनीभूतसच्चिदानन्दांशानां वा शाक्तादित्रिविधविसर्गाणां कुलं सत्कुलम् । सजातीयसमूहात्मकमित्यर्थः । तदुक्तं तन्त्रे-- "सजातीयं कुलं स्मृतम्" इति । इदं इदमंशस्फुरणात्मकम् । तव विद्याऽविद्याऽभिन्नचिदचिन्मयप्रकृत्यास्तव । आननं पंचेन्द्रियसप्तशीर्षण्यप्राणमयं वक्ष्यमाणपञ्चवाहसप्तस्रोतस्फुरणात्मना स्वदीयमुखरूपं, च । यद्वा, मानवप्राजापत्यब्राह्मौघापरपर्यायगुरुपंक्तिस्फुरणरूपेण दिव्यसिद्धौघादित्रिपुटीरूपं वा तव मुखम् । तवासनमिति पाठे-- त्वदीयपीठरूपं चेत्यर्थः । अवेक्ष्य त्वत्कृता या विकल्पबुद्धिः त्वत्स्वरूपं न कलङ्कयति । तद्विदुषो विमर्शकस्य वा । कस्य न मुक्ततेति पूर्वश्लोकेनान्वयः ॥२-१४॥

उक्तप्रकारेण यद्यपि नित्यमुक्तएवाहमपि तथापि मायीयमलप्रयुक्ताऽऽ

णवमलस्योक्तानन्दानुभूतिप्रतिबन्धकत्वात्तन्निरासमात्रं त्वदधीनमिति त्वां प्रार्थयामीत्याह—

वेद्यवेदकविभेददक्षया
मायया क्रमवदंगगामिनी ।
या स्थिताम्ब बहिरक्षकांक्षिणी
तां जहि त्वमणुतां मयि स्थिताम् ॥२५॥

वेद्यवेदकेत्यादिना । हे अम्बेति सम्बुद्ध्यर्थः पूर्ववत् । वेद्यवेदकविभेददक्षया— वेद्यवेदकयोः चिच्चैत्ययोः चैत्यचितोर्वा यो विभेदः अरूपे सरूपे वा गन्धर्वनगरस्वशिरश्छेदनदर्शनादिवत् रूपरूपान्तरकल्पनादिविलक्षणभेदरूपः । तस्मिन् दक्षया समर्थया । मायया- मीयते परिच्छिद्यते स्वेनैव स्वस्वरूपमिति मायेति व्युत्पत्तिसिद्धभेदप्रथा वागर्थरूपया । क्रमवदङ्गगामिनी पूर्वोक्तसृष्टिसंहारान्यतरक्रमवत् यदङ्गं वागर्थशरीरं तद्गामिनी । अतएव बहिरक्षकांक्षिणी- बहिर्मुखवागक्षं मातृकार्णतत्प्रत्याहारसिद्धशाब्दशरीरमहमक्षसम्मेलनात्मकं, आत्ममनइन्द्रियवृत्तिप्रत्याहारसिद्धार्थसम्मेलनात्मकं च बहिरक्षं । कांक्षत इति बहिरक्षकांक्षिणी । या अणुता वक्ष्यमाणलक्षणद्विविधाणवमलरूपा किंचिद्ज्ञताहेतुभूता जीवता । मयि स्थिता अहमर्थप्रत्ययरूपे आत्मनि स्थिता । तां त्वं जहि । मदीयाणवमलात्मकशिरश्छेदेन मां सदाशिवमञ्चफलकात्मकं पञ्चमप्रेतं कुर्विति तात्पर्यार्थः । वक्ष्यति चाग्रेपि "प्रेतमुज्झितगमागमं शिवे" इत्यादिना सदाशिवात्मकपञ्चममञ्चप्रेतस्याचलरूपतां । द्विविधाणवमलस्वरूपं तन्त्रसारे त्रिकशास्त्रस्य सर्वोत्तमत्वप्रतिष्ठापनावसरे "स्वातन्त्र्यहानिर्बोधस्य स्वातन्त्र्यस्याप्यबोधता । द्विधाणवं मलं प्रोक्तं स्वस्वरूपापहानितः" इति ॥२-२५॥

एवं जीवस्वरूपाणवमलापकर्षणोत्तरमारब्धादित्रिविधकर्मविलापनरूपकृतार्थता त्वदीयवृत्तिभिरेव सिद्धत्वादनुपायस्थितिस्सहजसिद्धेति सहजावस्थामनुसन्धत्ते—कर्मेत्यादिना ।

कर्म यद्विविधवासनात्मकं
मायया सहकृताणुभावया ।
वृत्तिभिस्तव विलाप्यते हि त
द्देवि भानुरुचिभिर्यथा (तमः) हिमम् ।२६॥

हे देवि! सहकृतानुभावया । उक्तजीवभावसहकृतया मायया । वेद्यभेदप्रथात्मिकया । विविधवासनात्मकं शुभाशुभवासनात्मकं यत्कर्म कार्यत इति शेषः । तत्कर्म तव वृत्तिभिः भानुरुचिभिस्तमो यथा तम इव विलाप्यते हि । नाश्यते खलु । अत्र वेद्यभेदप्रथात्मिकाया मायाया स्सहकृताणुभावत्वविशेषणेन आणवावरणशक्तिं विना विक्षेपात्मिकायास्तस्या अकिञ्चित्करत्वात्तदपेक्षयाऽऽवरणशक्त्यात्मकाणुताया एव संसृतिहेतुत्वाच्च तदुभयाणवमलनिरासकत्वदीयवृत्तिसान्तत्येन भानुरुचिभिरन्धंतम इव कार्मणमलविलापनं सहजसिद्धमेवेति हीति प्रसिद्धिद्योतकनिपातार्थः । यद्वा, हीति हेतुवाचको वा । हि यस्मात् त्रिविधवासनात्मककर्मसु तत्तत्कर्मवासानाविलापनमुखेन तव वृत्तिभिः सर्वसम्भुक्तयोषिच्चारित्रपालनवत् भानुरुचिभिः तत्तत्कालवृत्त्यनुरोधेन तम इव स्वयमेव नष्टं वासनात्मकं कार्मणं मलं त्वदीयवृत्तिविलापितमिव भवति । तस्मान्मयि स्थिता मणुतां जहीति पूर्वश्लोकेनवा सम्बन्धः । तथाचोक्तं मालिनीविजयेपि श्लो॰ ६ १ 'तस्मात्कालो न बोधस्य भेदकत्वाय कल्पते । नापि वेद्यस्य कालोसौ भेदकीभवितुं क्षमः'' इत्यादिना कालस्य वेद्यवेदकभेदकत्वं निरस्य "तस्मादर्कस्य सद्भावे सिद्धे कः खलु बालिशः । ब्रूयात्कथमयं स्वांशुशुभ्रिताशेषभूरिति ॥ तस्मात्सिद्धे प्रकाशेस्मिन्याः प्रकाशविकल्पनाः । तस्मात्ताः सर्वसम्भुक्तयोषिच्चारित्रपालनाः । असिद्धौ च प्रकाशस्य कोहं किं त्वं तमोपि किं । न किंचिदपि वा किं स्यात्तूष्णीं स्यादपि वा कथम् ॥ तस्मात्प्रकाशतादात्म्यलब्धभैरवभागिनाम् । भावानामपि कालोयं न किंचित्कर्तुमर्हति ॥ इत्यादिना आत्मवृत्तिप्रकाशतादात्म्यलब्धभैरवभागिनां सहजभिन्नभावानामपि भेदने सर्वस्वतन्त्रस्यापि कालशिवभट्टारकस्याकिंचित्कर-

त्वं कण्ठत उद्घोषितम्। कानाम कथा वराक्यास्सहकृताणुभावाया मायाया इति । तमोविनाशे भानुरुचीनामिव त्वदीयवृत्तीनां महिमा मनोवागाद्यविषये वर्तत इति भावः । हिममिति पाठे– भानुरुचिभिः हिममिव वृत्तिभिः कर्म विलाप्यत इत्यन्वयः ॥४-२६॥

एवमारब्धादिकर्मत्रयनामकमलत्रयविलापे त्वत्स्वरूपसाक्षात्कारलाभोपीत्याह—

चिन्मयीकृतमतोऽक्षदृश्यया
गुह्ययाम्ब! विपरीतचर्यया ।
लभ्यते समरसीकृताखिल
द्वैतवृत्ति तव घस्मरं वपुः ॥२७॥

चिन्मयीत्यादिना । हेअम्ब! अतः कार्मणमलविलापनात् आणवमलहापनाद्वा । गुह्यया हृद्गुहास्पन्दमात्रशरीरया। अतएव 'गुहूसंवरणे' इति धातोस्संवृतयथार्थरूपत्वेन रहस्यभूतया वा । तथाप्यक्षदृश्यया। आदिक्षान्तशाब्दशरीरेण दग्धपटाकृतिकार्थाक्षशरीरेण च दृश्यमानशरीरया। तादात्विकदेहेन्द्रियादिप्रवृत्तिमात्ररूपत्वेनाहन्ताभिनिवेशशून्ययेति यावत् । अतएव विपरीतचर्यया लोकविलक्षणत्वेन विकृतक्रियारूपया। समरसीकृताखिलद्वैतवृत्ति। समरसीकृताः सामरस्यं प्रापिताः अखिलद्वैतवृत्तयः सुखदुःखलाभालाभादिसकलद्वन्द्ववृत्तयः यस्मिन् तत्तादृशम् । तव वागर्थरूपिण्याः । घस्मरं प्रकाशैकस्वभावतया सर्वभक्षकम् । वपुः उप्यते सृष्टिसंहारादिवागर्थबीजमस्मिन्निति वपुरिति व्युत्पत्त्या नादवागर्थत्रिपुटीषडध्वाद्यात्मकं दाहरं व्योममयं शरीरम् । चिन्मयीकृतम् । पूर्वमचिन्मयमिदानीं चिन्मयं सम्पद्यमानं कृतं चिन्मयीकृतं सत् । इत्थंभूततद्भावे च्विप्रत्ययः । लभ्यते "तां जहि त्वमणुतां मयि स्थिताम्" इति पूर्वतमश्लोकोक्तास्मल्लिङ्गात् । साधकात्मना मया मदभिन्नेन वा साधकेनेति शेषः । तेन संसर्गस्वरूपाध्यासरूपयोस्साधकाहमोर्गौणमुख्यवागर्थात्मैकरूपत्वात्तदैक्यसिद्धिलाभस्त्वर्थाक्षिप्त एवेति भावः । अत्र चिन्मयीकृ-

तं समरसीकृताखिलद्वैतवृत्तीति च च्विप्रत्ययान्तविशेषणद्वयेन प्राकृतदेहेन्द्रियादिसंघातो ऽपि कालक्रमेण सामरस्योपास्तिबलाच्चिन्मयस्सम्पद्यत इत्यनुत्तरमहार्थप्रमेयक्रमे प्रमात्रहमक्षतत्परोऽयं विमर्श इति विमर्शप्रमेयमपि सूचितमिति वेदितव्यम् ॥६-२७॥

ततोऽसङ्गितापि लभ्यत एवेत्याह—

याश्चरन्ति तव खे चिदात्मके
शक्तयः करणलक्षणाश्शिवे!।
मुक्तबाह्यपदजृम्भणोद्यमा
त्वं हि तिष्ठसि तदूर्ध्वगे पथि ॥२८॥

याश्चरन्तीत्यादिना। शिवे साधकशिवस्वरूपे। हे सर्वमङ्गलेच्छारूपिणीति सम्बुद्धिर्वा। तव चिदात्मके। खे चिन्मये दहराकाशे। करणलक्षणाः। व्यापारवदसाधारणकारणं करणमित्युक्तबहिरन्तःकरणलक्षणाः। घ्राणवाक्श्रोत्रादिबहिरन्तःकरणरूपा इत्यर्थः। याश्शक्तयश्चरन्ति संचरन्ति। चरभक्षण इति धातोरन्नपानादितन्मात्रभोगान्भुञ्जते चेत्यर्थः। त्वं सर्वशक्तिसमष्टिव्योमेश्वरीरूपिणी त्वमित्यर्थः। तदूर्ध्वगे पथि। तासामन्तर्बाह्यकरणलक्षणशक्तीनामूर्ध्वगते नादवागर्थषडध्वमार्गे इत्यर्थः। मुक्तबाह्यपदजृम्भणोद्यमा। मुक्तः बाह्यपदानां जाग्रदादिसुषुप्त्यन्तानां जृम्भणस्योद्यमः यया सा तथोक्तासती तिष्ठसि। हीति सम्मतिद्योतको निपातः। प्रकृतेर्बाह्यपदजृम्भणं स्वभावः। सच प्राकृतसंसारसङ्गितारूपः। तस्यापि त्वत्सम्मत्या मुक्तत्वादसङ्गितालाभ इति भावः। यद्वा मुक्तानां विदेहकेवलिनां बाह्यपदस्य तुरीयावस्थारूपस्य जृम्भणमात्रोद्यमः यस्यां निवृत्तिकलामय्यां प्रकृत्यां तादृशीप्रकृतिस्सती तिष्ठसि हीति वाऽर्थः। उभयधाप्यसङ्गितेति भावः। तथा च सौन्दर्यलहर्यां श्रीशङ्करभगवत्पूज्यपादाः "क्षितौ षट्पंचाशत् द्विसमधिकपञ्चाशदुदके, हुताशे द्वाषष्टिश्चतुरधिकपञ्चाशदनिले। दिवि द्विष्षट्त्रिंशन्मनसि च चतुष्षष्ठिरिति ये, मयूखास्तेषामप्युपरि तव पादाम्बुजयुगम्" इति ॥६-२८॥

इतःपरं प्रतीयमानद्वैतवृत्तीनामसङ्गात्मानन्दावाप्तिसहायतेति तृतीयविमर्शवक्ष्यमाणधामादिक्रमत्रयेपि सप्तसप्तप्राकारं प्राकृतत्रमनं गुप्तिभाषितजगद्विजृम्भणेन सूचयति—

**सप्तधा वमसि या त्वमीश्वरि!**
**व्योमशान्तसुखचिद्गुणास्पदम् ।**
**आश्रितान्श्वासि नाऽपरं शिवं**
**द्वन्द्वशाद्वयपदातिलंघिनी ॥२९॥**

सप्तधेति । हेऽश्वरीति साभिप्रायसम्बुद्धिः । या त्वं वक्ष्यमाणलक्षणषड्विधपरामर्शात्मिका त्वमित्यर्थः । शान्तसुखचिद्गुणास्पदं-- शान्तसुखा या चित्, येच तद्गुणाः सर्वज्ञत्वादयः "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां वर्गो भगस्स्मृतः॥ तथा-- उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" इत्युक्तलक्षणाश्चेत्यनुत्तरप्राणनादबिन्दुकलाषडध्वत्मनि । सर्वज्ञत्वादयः, शमादयः, कामक्रोधादयश्चेति तदीयसंवित्षडध्वमार्गे वक्ष्यमाणलक्षणवर्णपरामर्शषट्कात्मकास्संहितादिषु सन्धिविग्रहयानासनद्वैधीभावसमाश्रयापरनामकशाब्दवागर्थकार्यात्मकाश्चेति मातृकार्णषडध्वे च सन्ति, तेषां सर्वेषामास्पदं । व्योम । सप्तधा वमसि । तत्तत्षडध्वत्रिपुटीसमष्टिप्रकारभेदेन । चिद्व्योमधामनि मनोबुद्धिविशिष्टपञ्चेन्द्रियवृत्तिमयसप्तस्रोतःप्रकारेण । तदीयसंविदि नादे च क्रमेण, आरम्भतरुणयौवनप्रौढतदन्तोन्मनानवस्थाद्व्योल्लाससप्तकप्रकारेण, षड्जादिनिषादान्तगान्धर्ववेदोक्तस्वरसप्तकप्रकारेण च, तदीयानुत्तराकारबिन्द्वर्धचन्द्ररोधिन्यादिवक्ष्यमाणलक्षणोन्मनीनादनवकक्रमेपि सू॥ 'अ इ उण्' इत्यादि "ननाद ढक्कां नव पञ्चवारं" इत्युक्तनादलक्षणमाहेश्वरमातृकार्णसृष्ट्यादिक्रमेणानुत्तराकारादिप्रणवान्तनादवर्णप्रकारेण च । तत्तदीयाभिधेयार्थषडध्वक्रमेपि "सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषस्समिधस्सप्तजिह्वाः । सप्त इमे लोका येषु चरन्ति प्राणा गुहाशयान्निहितास्सप्त सप्त । अतस्समु-

द्रा गिरयश्च सर्वेऽस्मात्स्यन्दन्ते सिन्धवस्सर्वरूपाः । अतश्च विश्वा ओषधयो रसाश्च येनैष भूतस्तिष्ठत्यन्तरात्मा" "सप्त ते अग्ने समिधस्सप्तजिह्वास्सप्तर्षयस्सप्तधामप्रियाणि" इत्यादितैत्तिरीययाज्ञकीमहानारायणीउपनिषन्मन्त्रादिसकलश्रुतिप्रकाशितसप्तव्याहृतिप्रकृतिविकृतिवर्णवर्गप्रभृतिलोकालोकान्तयावत्सृष्ट्यादिहेतुत्वेन सांख्यशास्त्रप्रपंचितसप्तस्रोतोमयात्मविभूतिप्रकारेण च । व्योमैव विविधाकृतिकां प्रणवानुत्तराकारप्रकृतिं च वमसीत्यर्थः । तथाच सांख्यसूत्रम् "मूलप्रकृतिरविकृतिः महदाद्याः प्रकृतिविकृतयस्सप्त । षोडशकश्च विकारः न प्रकृति र्न विकृतिः पुरुषः" इति । सांख्यप्रणवरूपिणी मूलप्रकृतिः । वैदिकवागर्थभेदविवक्षयानुत्तराकारविकृतिरूपेण सप्तमी अष्टमी चापि भवतीत्यविकृतिः । वैदिकी तु वागर्थैकरूपत्वाद्विकृतिराहित्येनाविकृतिर्नवमीति रहस्यम् । अतएव नवमी दशमी एकादशी द्वादशी त्रयोदशी च तत्तन्मातृकार्णसमाम्नायभेदाद्भवतीत्यपीति वैदिकमेव रहस्यान्तरम् " इत्थं या त्वं व्योम वमसि । सा त्वं । द्वन्द्वया वृत्त्या द्वैतवृत्त्या । ना नृरूपिणी । गुप्तिभाषितजगद्विजृम्भणव्यवहारे मनुष्यव्यवहारेण व्यवहृतासीत्यर्थः । अतएवाद्वयपदातिलंघिनी । अद्वयपदं तुरीयपदमप्यतीत्य लङ्घते वेद्यभेदं प्रति भोगान्निवर्तते तुरीयातीतमार्गेणेत्यद्वयपदातिलङ्घिनी । यद्वा "लघि भोजननिवृत्ताविति धातोः" 'अनश्नन्नन्यो अभिचाकशीति" इति श्रुतेश्च । द्वैतपदं प्रविश्यापीश्वरशक्त्यभेदेन भोगान्निवृत्तितत्परेति वाऽन्वयः । अनुत्तरनादमातृकार्णक्रमेपि सृष्ट्यादौ अद्वयम् अर्थैकद्विमात्रात्मकमकारद्वयम् । तदीयपदञ्च विन्दुत्रयात्मकम् । अतीत्य प्लुतरङ्गादिस्वरनादक्रमेणातिक्रम्य लङ्घत इत्यद्वयपदातिलङ्घिनी च सती । आश्रितान् संजाताश्रयान् । अनुत्तराकाराश्रितांश्च साधकान् । परं शिवं । आत्मभेदेनैव परोक्षतया विद्यमानं जीवेश्वरान्यतररूपं च । नयसि प्रापयसीति नयतेर्द्विकर्मकत्वं । यद्वा परं शिवं । आश्रितान् साधकान् । प्रधानाप्रधानकर्मव्यतिहारेण । परं जीवं । जीवं च परमेश्वरं वा यथेच्छम् । नयसि प्रापयसीति वा । तथैव आश्रितान् स्वदाश्रितां श्च ।

सिद्धान् । अपरं शिवं न नयसि । किन्त्वात्मरूपमेव शिवं प्रापयसि च । इत्यावृत्त्या पदभेदेन वा समन्वयभेदश्च । तदानीं द्वन्द्वयापि वृत्त्या आत्मावाप्तिकरणभूतया । द्वयपदातिलङ्घिनी -- द्वयपदानि पूर्वोक्तजाग्रदादीनि सुष्व्यादीनि वा । स्वविरुद्धसुप्तिसंहारादिद्वन्द्वभावेन द्वयपदानि तानि अतिलङ्घयत्याश्रितानिति गर्भितणिजन्तविग्रहेण द्वयपदातिलङ्घिनीति समासो वक्तव्यः । "महीमूषु मातरगं सुव्रतानामृतस्य पत्नी मवसे हुवेम । तुविक्षत्रामजरन्तीमुरूचीगं सुशर्माणमदितिगं सुप्रणीतिम्" इति मन्त्रोक्तदेवतरणि देवमातृरूपिणी सती सिद्धानात्मशिवमेव प्रापयसीत्यर्थोऽपि वेदितव्यः ॥७-२९॥

एवमुक्तलक्षणां त्वां "चत्वारि वाक्परिमिता पदानि" इति श्रुत्युक्तपरादिपदचतुष्टयसमष्टिरूपयापि वाचा मुख्यया वृत्त्या निर्णीय वक्तुं न पार्यते किमुत वैखर्येत्याशयेनाह—

**या प्रमातरि निषेदुषी परा**
**प्रत्यगात्मनि विमर्शविग्रहा ।**
**वागियं त्रिविधभावभासिता**
**त्वां (न) स वक्ति किमुताम्ब! वैखरी ॥३०॥**

या मातृतरीत्यादिना । या परानाम्नी वाक् । प्रमातरि आत्मनि ज्ञेष्ठायामम्बायां च । प्रमां यथार्थवृत्तिमतति व्याप्नोतीति व्युत्पत्त्या व्यापकात्मनि । त्रिपुटीकल्पनाधिष्ठानात्मनीत्यर्थः । विमर्शविग्रहा । विमर्शमयविशेषज्ञानरूपिणीसती । निषेदुषी । सा प्रत्यक् । प्रत्यगात्मेत्यर्थः । त्रिविधभावैः पश्यन्तीमध्यमावैखरीनामकत्रिप्रकारकधर्मैः । प्रमातृप्रमाणप्रमेयरूपैर्वा । भासिता । इयं वाक् त्वां स इति प्रत्यगात्मैवेति वक्ति । हेअम्ब! वैखरी किमुत । एकभावभासिता वैखरी त्वां प्रत्यगात्मेति वक्तीति किमु वक्तव्यम् । महाप्रमातरि प्रत्यग्रूपेण वर्तमाना परावागपि पश्यन्त्यादित्रिविधभावैर्भासितापि महाकालीरूपिणीमात्मानं स्वस्वरूपेण वक्तुं कर्तृकर्मविरोधेनापारयन्ती सती प्रत्यक् आत्मा इति वक्ति । किमुत वैखरीभावभा-

सितेति भावः । न वक्तीति पाठे—त्रिविधभावभासिता परैव त्वां न वक्ति किमुत वैखरीत्यर्थः । उभयथापि वाक् स्वात्मरूपिणीं त्वां वक्तुमशक्तैवेति भावः । अतएव "यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह" इत्यादिश्रुतिरपि पराप्रभृति वैखर्यन्तं तदादि परांतं च आनुलोम्येन वैलोम्येन वा गणनायां परावैखर्योरुभयोरपि तुरीयरूपत्वात्तदतीतमहाविमर्शरूपिणीं त्वां सृष्टिस्थितिसंहारान्यतमरूपेण, तत्त्रितयसामरस्यतुरीयरूपेण वा वक्तुमशक्ता केवलं तच्चतुष्टयातीतमहाविमर्शसद्रूपेणवास्तित्वं द्योतयन्ती वाच इति बहुत्वविवक्षयापि स्वस्वरूपस्यावाच्यत्वेन मनसा सह स्वरूपान्निवृत्ति कण्ठरवेणाह "यतो वाचो निवर्तन्ते" इति । अतएव श्रीसंवित्स्तोत्रेपि पञ्चपदमहाविमर्शमयवाक्स्वरूपमेवमुक्तम् "विमर्शो बिन्दुनादौ च स्फोटः शब्दश्च वाक्क्रमः" इति । उपदेशसाहस्रयां तत्त्वमसिवाक्यार्थप्रकरणे एतदभिप्रायेणैव वागर्थयोस्स्वरूपैक्यमुक्तम् "सम्भाव्यो गोचरे शब्दः प्रत्ययो वा न चान्यथा । न सम्भाव्यौ तदात्मत्वादहंकर्तुस्तथैव च" इति । अहंकर्तुरित्येकं पदम् । अहंशब्दप्रयोक्तुरित्यर्थः ॥८-३०॥

अथ महाविमर्शमयवाग्रूपिण्याः कालिकायाः स्वस्वरूपादधःस्थितसृष्टिस्थितिसंहारात्मकक्रियाशक्तित्रिपुट्याः नादबिन्दुकलात्मकज्ञानशक्तित्रिपुट्याश्च मध्यकेन्द्रस्थित्या पूर्वोक्ततुरीयतदतीतादिसप्तस्रोतोक्रमेनेन सप्तव्याहृतिरूपतामपि व्याकरोति—

नादबिन्दुलिपिविग्रहा गिर
स्तिस्र ऊर्ध्वगविमर्श(शीकराः) शक्तिकाः ।
संहृतिस्थितिविसृष्टिधामसु
व्याहृतास्त्वदध ईशवल्लभे ॥३१॥

नादबिन्द्वित्यादिना । हे ईशवल्लभे! पूर्वोक्तमहाविराड्गायत्रीवागर्थरूपेश्वरीरूपिणीति साभिप्रायसम्बुद्धिः । गिरः महाविमर्शमयपरावागर्थशरीरिण्या वाग्देवताया इत्यर्थः । ऊर्ध्वगविमर्शशीकराः ऊर्ध्वभूमिं गतो यो विमर्शः तच्छीकराः । तदीयत्रसरेणवः । विमर्शशक्तिका इति पाठे—वि-

मर्शस्वरूपस्याल्पशक्तय इत्यर्थः। तिस्रः त्रिसङ्ख्याकाः। नादबिन्दुलिपिविग्रहाः— नादः अनाहताख्यः विवक्षापरपर्यायोऽव्यक्तध्वनिविशेषः। जनलोकव्याहृतिस्थानीयः। बिन्दुः वक्तव्याकाराकारितनिश्चयात्मकबुद्धिवृत्तिविशेषः। बिन्दति स्पन्दतीति व्युत्पत्त्या तपोलोकव्याहृतिस्थानीयः। 'तप आलोचने' इति धातोः प्राणस्पन्दाख्यबुद्धिवृत्तिरूप इति यावत्। लिपिः अहन्ताममतादिस्वरूपाध्यासाध्यासितकलापरपर्यायः सत्यलोकव्याहृतिस्थानीयः। व्यावहारिकपारमार्थिकसत्तासामरस्यस्फुटाकृतिर्ध्वनिविशेषः। एवं त्रिरूपविग्रहाः। त्वदधः। सच्चित्सुखात्मकत्वत्स्वरूपस्याधस्तात् संहृतिस्थितिविसृष्टिधामसु। व्याहृताः। वैलोम्येन सुवर्भुवः भूः इत्युक्तविलोमव्याहृतिस्थानेष्वेव जनस्तपस्सत्यव्याहृतयोऽपि पठिता इत्यर्थः। नादबिन्दुलिपिनामभिर्व्यवह्रियमाणपदान्येव अर्थप्रक्रियायां संहारस्थितिसृष्टिरूपेण व्यवह्रियन्त इति भावः। तादृशशब्दार्थशरीरिणीत्वं परावाग्रूपेण तदुभयमध्यकेन्द्रवर्तिनीति प्रौढप्रक्रियया वर्णनम्। एतेन परायाः बहिःपदे पश्यन्तीमध्यमावैखरीरूपेण त्रैविध्यम् अन्तःपदे नादबिन्दुकलात्मकविमर्शारूपेण च। षाड्विध्ये स्वस्वरूपेण सह सप्तस्रोतोमयत्वम्। नादबिन्दुकलात्मकत्रिपुटीमयत्वे मह इति चतुर्थव्याहृतिमयतुरीयरूपतत्त्वस्य सृष्टिस्थितिसंहारैस्सह स्वस्य नादबिन्दुकलात्मकस्वरूपत्रिटीभेदे विवक्षिते स्वरूपत्रिपुट्यपेक्षया तुरीयातीतत्वं चेत्यादि यथायथमूह्यम्। अतएव श्रुतिरपि तुरीयव्याहृतिस्वरूपवर्णनावसरे 'भूर्भुवस्सुवरितिवा एतास्तिस्रो व्याहृतयः। तासामुहस्मैतां चतुर्थीम्। महाचमस्यः प्रवेदयते। मह इति। तद्ब्रह्म। स आत्मा। अङ्गान्यन्या देवताः" इत्यादिना तुरीयनादमयमहाव्याहृतेरेव वागर्थब्रह्मरूपत्वम्। अन्ते च "ता वा एताश्चतस्रश्चतुर्धा। चतस्रः चतस्रो व्याहृतयः। ता यो वेद। स वेद ब्रह्म। सर्वस्मै देवा बलिमावहन्ति" इत्यादिना महाचतुरर्थक्रमरूपेण तत्स्वरूपवेदितुस्सर्वदेवतापूज्यत्वधर्मपुरस्कारेण ब्रह्मत्वञ्च कण्ठत उदघोषयदिति दिक् ॥९-३१॥

एवं वागर्थत्रिपुटीद्वयेन सह सप्तव्याहृतिसप्तस्रोतोमयत्वमुपवर्ण्य सो-

मसूर्यवह्निमयमण्डलत्रयातीततुरीयाग्निधामानमाकाशस्थ कालनाममूर्तिचक्रमय-सङ्कर्षणाग्निशिवदर्शनं प्रार्थयन् स्तौति—

दृक्क्रियात्मशशिभानुमध्यगं
खे (चरत्यनिलवत्सुधामयः) चरत्वनलयष्टिधाम यत् ।
यत्तदूर्ध्वशिखरं परं नभ
स्तत्र दर्शय शिवं त्वमम्बिके ।३२॥

दृक्क्रियेत्यादिना । हे अम्बिके! दृक्क्रियात्मशशिभानुमध्यगम् । दृक्क्रियात्मानौ ज्ञानक्रियामयौ । यौ शशिभानू तयोर्मध्यगतम् । अनिलवत् प्राणवायुमत् । यत् खं सुधाम तत्र खे । सुधामय इति पाठे—अमृतजीवशक्तिमयः । चरति प्राणात्मना सञ्चरति । 'चरभक्षणे' इति धातोश्चतुर्विधान्नं भक्षयतीति वाऽर्थः । अत्र श्रुतिरपि "सोग्रभुग्विभजन्तिष्ठन्नाहारमजरः कविः" इति तस्य चतुर्विधान्नस्याग्रभुक्त्वं तथा "नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा । तस्याशिखाया मध्ये परमात्मा व्यवस्थितः । स ब्रह्म स शिवस्स हरिस्सेन्द्रस्सोऽक्षरः परमः स्वराट्" इति तस्यैव सर्वदेवतामयत्वं च वर्णयति । शार्ङ्गधरसंहितायां च "नाभिस्थः प्राणपवनः स्पृष्ट्वा हृत्कमलान्तरम् । कण्ठाद्बहिर्विनिर्याति पातुं विष्णुपदामृतम् ॥ पीत्वाचाम्बरपीयूषं पुनरायाति वेगतः । प्रीणयन्देहमखिलं जीवयन्जाठरानलम्" इति । स्मृतिरपीममेवार्थं स्फुटयति । खेचरत्वनलयष्टिधामयत् इति पाठे— अनलयष्टेः यष्ट्याश्रयाग्नेः धामेव धाम यस्य खस्य तादृशं यत् चिदग्निदहराकाशमयं । चरतु सञ्चरतु । भक्षयतु वा । इति सम्भावनायां लोट् । चतुर्विधान्नजारणकार्यलिंगकानुमानसिद्धं तत्सञ्चरणं भक्षणं वेति भावः । तदूर्ध्वशिखरं तादृशचिन्मयदहराकाशस्य यदूर्ध्वशिखररूपं परं नभः । अस्तीति शेषः । 'आकाशशरीरं ब्रह्म' आकाशस्तल्लिङ्गात्' इत्यादिश्रुतिसूत्रप्रमाणकं ब्रह्मबिलद्वादशान्तादिरूपं यत् चिन्मयं व्योमास्ति तत्र खे शिवं दर्शय । सर्वमङ्गला दहराकाशरूपिणी त्वम् । सर्वमङ्गलं द्वादशान्तब्रह्मबिलात्मकं स्वात्मरूपं शिवं प्रत्यक्षीकुर्विति फलितोऽर्थः ।

"स य एषोन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः" इत्युपक्रम्य तैत्तिरीयशीक्षावल्यां "आप्नोति स्वाराज्यम्" इत्या-दिना मोक्षफलोपन्यासादिति भावः ॥१०-३२॥

एवं मण्डलत्रयसामरस्यात्मना त्रिचतुरर्थक्रमोपयोगिसप्तव्याहृतिसप्तस्तो-तोमयत्वमनुपवर्ण्य पूर्वोक्तवागर्थसामरस्यत्रिपुटीकृत्यत्रयात्मना वक्ष्यमाणपञ्चार्थ-महाक्रमोपयोगिनवब्रह्ममयत्वं स्फुटमुपवर्णयति—

वैखरीप्रभृतिवाक्त्रयं परे
　　मेयमानमि(ति कर्तृ) तरत्र) लक्षणम् ।
उद्भवस्थितिलयात्मकं वपु
　　र्भूरि भेदमपरं स्मरन्ति (यत्) ते ॥६३॥

वैखरीत्यादिना । परे परावाग्रूपिणि । अभिन्नवागर्थात्मकमहाप्रमात-रीत्यर्थः । हे परे परावाक्स्वरूपिणि कालीति सम्बुद्धिर्वा । ज्ञानक्रियात-त्सामरस्यापरपर्यायशाब्दार्थकृत्यत्रिपुटीत्रयात्मना नवब्रह्मसमष्ट्यात्मकत्वात्परस-या इति भावः । वैखरीप्रभृतीनां वैखरीमध्यमापश्यन्तीनाम्नीनां वाचां त्र-यम् । मेयमानमिति कर्तृलक्षणम् । यथाक्रमं मेयमानमिति कर्तॄणां प्रमेयप्रमाणप्रमातॄणां लक्षणं स्वरूपं भवति । अर्थपदे इति भावः । मेय-मानमितरत्रलक्षणमिति पाठे- इतरत्र अर्थपदे । भेदप्रमात्रात्मनीत्यर्थः । मेयमानं प्रमेयभूतस्य भेदस्य मानं प्रमाणम् । लक्षणं स्वरूपं भवति । एवमभेदभेदयोश्शरीरं निरूप्य तत्सामरस्यशरीरमपि निरूपयति— उद्भवे-त्यादिना । उद्भवस्थितिलयात्मकं सृष्टिस्थितिसंहाररूपम् । भूरिभेदं पूर्वो-क्तभेदाभेदस्वाभाव्यादधिकतरभेदयुक्तम् । अतएव ते तव अपरं वपुः ज-डाजडसामरस्यात्मकं शरीरं स्मरन्ति । स्मर्तार इति शेषः । स्मरन्ति य-दिति पाठे- यद्भूरिभेदं वपुरस्ति तदपरं 'अ इ उण्' इत्यादिनादस्वरन-वकसामरस्यात्मकं स्मरन्तीत्यर्थः ॥११-३३

एवं भेदाभेदसामरस्यमयत्रिपुटीत्रयं विविच्य तत्र नवयोनिरूपे शि-वशक्त्योराश्रयाश्रयिभावेन पञ्चवाहतां विवेचयति—

विश्वमूर्तियददृष्टविग्रहं
त्व (त) त्प्रशान्तिपदमैश्वरं वपुः ।
तत्र ते य उदयः कुलेशि (सुवेशि) तं
सृष्टिराश्रयति पंचवाहता ॥३४॥

विश्वमूर्तीत्यादिना । हेकुलेशि! सजातीयसमूहः कुलम् । तस्येशि नियन्त्रीति सम्बुद्धिः । विश्वं व्योमव्याप्त्याद्येकाशीतिपदात्मकमेव मूर्तिर्यस्य तत्, यद्वा 'विश्वः स्थूलाभिमानी स्याद्विश्वं चेत्सर्वनामकम्' इत्युक्तलिङ्गानुशासननयेन सर्वनामकजगदाकारमूर्तिकं, स्थूलाभिमानिमूर्तिकं वा । तथाप्यदृष्टविग्रहं अदृष्टः चर्मचक्षुरगोचरः विग्रहः विविधग्रहः । भेदज्ञानवासनारूप इति यावत् । यस्य तत् अदृष्टविग्रहमित्यर्थक्रमे । अकारेण अनुत्तराकारमातृकार्णमूलभूतेन दृष्टविग्रहं अदृष्टविग्रहमिति शाब्दक्रमे च तादृशम् । त्वत्प्रशान्तिपदं त्वदीयप्रशान्तिस्थानम् । तत्प्रशान्तिपदमिति पाठे– तस्य वागर्थमयेश्वरस्य प्रशान्तिस्थानम् । तत् परोक्षत्वेन व्यवहार्यं प्रशान्तिपदमिति वा । ऐश्वरं वपुः पूर्वविमर्शोक्तकैलासाद्रिमयं ईश्वरसम्बन्धीश्वराभिन्नं वागर्थमयं वा वपुः यदस्ति तत्र तस्मिन्वपुषि ते तव उदयः । पञ्चाक्षमालामयज्ञानेन्द्रियवृत्तिपञ्चकविकासरूपः । वक्ष्यमाणखेचर्यादिवृत्तिपञ्चकरूपो वा अस्ति । तं त्वदीयोदयम् । पञ्चवाहता सृष्टिः । ज्ञानगर्भितक्रियाशक्तिविकासरूपिणी । कर्मेन्द्रियवृत्तिप्रवाहता च । क्रियागर्भितज्ञानशक्तिविकासरूपिणी ज्ञानेन्द्रियवृत्तिप्रवाहता च । उभयसामरस्यविकासरूपिणी खेचर्यादिशक्तिपञ्चकप्रवाहता च । सृष्टिरूपिणी आश्रयति । सुवेशितमिति पाठे– "तत्सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य । सच्चत्यच्चाभवत्" इति श्रुत्युक्तं सुष्ठु वेशितं संजातसृष्ट्यनुप्रवेशरूपं त्वदीयोदयं पञ्चवाहतासृष्टिराश्रयतीत्यर्थः । त्वदनुप्रवेश एव वागर्थसृष्टित्वेन व्यवह्रियत इति भावः । अत्र कुलेशीति कालीविशेषणमहिम्ना विश्वमूर्त्यदृष्टविग्रहमिति वागर्थमयेश्वरवपुर्विशेषणमहिम्ना च नवयोनिनादनाधसामरस्यात्मकविश्वमयश्रीचक्रे त्रिपुटीतत्सामरस्यात्मना बैन्दवत्रिकोणचक्रयोरन्तः त्रिपुटीतत्सामरस्यरूपयोः अन्तर्बहिर्बुद्धीन्द्रियत्रिपुटीसामर

स्यस्थानीयाष्टाराष्टदलाम्बुजयोः, अन्तर्बहिर्विमर्शक्रियासाधनप्राणेन्द्रियमण्डलसूर्यमनश्चन्द्रात्मनोर्दशारद्वयषोडशदलपद्मयोः, अन्तर्बहिरहङ्कारात्मनोर्भुवनास्रभूपुरयोश्च आश्लेषात्मकं शैवशाक्तचतुःपञ्चकोणचक्रद्वयमिथुनात्मकं सामरस्यमपि सूक्ष्मेक्षिकया सूत्रितमिति बोध्यम् । तदुक्तं ब्रह्माण्डपुराणे ललितात्रिशतीनामोत्तरपीठिकायाम् "त्रिकोणे बैन्दवं श्लिष्टमष्टारेष्टदलाम्बुजम् । दशारयोष्षोडशारं भूपुरं भुवनास्रके ॥ शैवानामपि शाक्तानां चक्राणां च परस्परम् । अविनाभावसम्बन्धं यो जानाति स चक्रवित्" १२-३४

एवं शिवशक्त्योराश्रयाश्रयिभावेन नवयोनिचक्रमयमभेदमुपपाद्य तत्र पूर्वोक्त "चत्वारि वाक्परिमिता पदानि" इति श्रुतिसिद्धवेदमयचतुस्समुद्ररूपपरावाङ्मयशब्दार्णवे तरङ्गमयत्वेनार्थपञ्चकमयीं वक्ष्यमाणपञ्चवाहक्रमोपयोगिनीं वागर्थसृष्टिं व्युत्पादयति—

**या परा स्फुरति शक्तिरम्बिके!**
**तत्र हि त्वयि पयोधिवीचिवत् ।**
**शिंजिकावयवकार्थपंचकं**
**वर्तते विविधसूक्ष्मविग्रहम् ॥३५॥**

या परेत्यादिना । हे अम्बिके! या परावाग्रूपिणी शक्तिः स्फुरति । तत्र तस्यां त्वयि । तद्रूपिण्यां त्वयीत्यर्थः । पयोधिवीचिवत् समुद्रवीचय इव । शिंजिकाः ज्ञानक्रियामयव्यापारपादाभरणध्वनिविशेषा एव अवयवानि येषां शब्दस्पर्शाद्यर्थानां जातिव्यक्तिद्रव्यगुणक्रियारूपाणां, पुरुषार्थचतुष्टयतत्सामरस्यरूपाणां वा, अर्थानामर्थांशरूपाणां नि॥ 'पुंस्यर्थोऽर्थे समेशके' 'अर्थोऽभिधेये रैवस्तु' इत्युभयत्राप्यमरकोशादभिधेयानां पञ्चकं च शिंजिकावयवकार्थपञ्चकं । विविधसूक्ष्मविग्रहं नानाप्रकारकसूक्ष्माकारविलक्षणज्ञानयुक्तं तद्रूपञ्च वर्तते । अन्तस्समुद्रं ध्वनियुक्तवीचिपरम्परावत् अतर्हृदयं सशब्दं विषयपञ्चकं, पुरुषार्थपंचकं वा, अभिधेयार्थपञ्चकमपि वा साङ्केतिकसूक्ष्मशब्दशरीरेणैव वर्तत इति भावः । अत्रार्थपञ्चकस्य पयोधिवीचिवदित्युपमानसामर्थ्येन शिंजिकावयवकत्वविशेषणसामर्थ्येन च

समुद्रवदधिष्ठानभूतायां चतुर्विधाभिधायकशक्तिरूपेण पराशब्दशक्तिरूपिण्यां सृष्टिकाल्यामभिधेयार्थपञ्चकस्यापि पंचविधत्वं शब्दशरीरेणैवेत्यपि बोतितम् । तदेतत्सर्वं चतुर्थविमर्शे– "अर्थपञ्चकसुधाप्रपूरिते यद्भवामृतनिधौ सुखप्लवे"इत्येतत् श्लोकव्याख्यानावसरे विवेचयिष्यत इत्यत्र विरम्यते॥ १३-२९॥

एवमन्तर्बहिस्साधारणं वाग्देवता त्रिचतुःपंचार्थमहाक्रमस्वरूपमुपवर्ण्य "अन्तर्बहिःपुरुषकालरूपैः" इति पूर्वमुक्तप्रकारेणान्तरात्मविभवेन सह बहिः कालविभूतिमपि सामरस्येन वितत्य वर्णयितुं द्वादशमासात्मकसंवत्सरकल्पेपि "अस्ति त्रयोदशो मास इत्याहुः" इत्युक्तद्वादशान्तविन्दुसामरस्येन सृष्टिकालीमुखचतुष्टयात्मकं चतुरर्थक्रमवर्णनमारभते—

त्वन्मुखं त्रिपथनेत्रि! भात्मकं
शक्तिवृन्दमिहतुर्यधागमम् ।
द्वादशक्रमपदं पदादिभिः
(जृम्भितं) बृंहितं) जगति तच्चतुस्त्रिकैः ॥३८॥

त्वन्मुखमित्यादिना । हेत्रिपथनेत्रि! त्रीणि वक्ष्यमाणबीजयोनिवर्णोत्पत्तिप्रक्रियायां अकार इकार उकारपरामर्शत्रिकरूपाणि, शाम्भवशाक्ताणवविसर्गत्रयविलासात्मकप्रमातृप्रमाणप्रमेयांशज्ञानोपासनाकर्मरूपाणि, तदुपयोगिस्थूलसूक्ष्मकारणशरीररूपाणि, तदीयजाग्रत्स्वप्नसुषुप्त्यवस्थारूपाणि, तत्सर्वकारणभूतभविष्यद्वर्तमानकालावयवानि च पन्थानः तत्त्वावबोधकमार्गविशेषाः । तेषां समाहारस्त्रिपथम् । तस्य नेत्रि नायिके! इतित्रा, त्रयः पन्थान एव नेत्राणि यस्याः सा त्रिपथनेत्रीति वा सम्बुद्ध्यर्थः । इह पूर्वश्लोकोक्तसूक्ष्मविग्रहार्थपंचके विषये, तदभिधायकपरादिवाक्समुद्रचतुष्टये वा। तुर्यधागमम् 'अ इ उण्' इत्यादिनादनवकाभिन्नस्वरनवकबोधकचतुस्सूत्रीरूपेण तुर्यधा मातृकास्वरखण्डे 'ऋ ॠ ऌ ॡ' इत्याकारकषण्डस्वरचतुष्टयात्मना,'ए ऐ ओ औ' इत्याकारकसन्धिस्वरचतुष्टयात्मना, परापश्यन्त्यादिवाक्पदचतुष्टयात्मना, उदात्तादिस्वरचतुष्टयात्मना च शब्दब्रह्ममये, वेदचतुष्टये, वागर्थक्रमे, तथा स्थूलसूक्ष्मकारणमहाकारणोपाधिचतुष्टयात्मना, तदीयजाग्रदादितुरीयान्तावस्थाचतुष्टयात्मना, दिग्देशकालसृष्ट्यादितिरोधानान्तकृत्यच-

तुष्टयरूपेण च, जगन्मये च वागर्थक्रमे । तुर्यधा चतुर्विधरूपेणागमयति स्वस्वरूपमिति वा । चतुर्विधागमवत् स्वयमेव भवतीति वा तुर्यधागमम् । चातुस्वर्यादिरूपेण चातुर्वर्ण्यादिरूपेण च चतुर्धा स्वरूपावेदकमित्यर्थः । अतएव भात्मकं वक्ष्यमाणद्वादशस्वरपरामर्शरूपेण द्वादशान्तमहानादबिन्दुरूपेण च प्रकाशचक्रात्मकम् । द्वादशराशिचक्रात्मकत्वेन नक्षत्रात्मकं च । अतएव शक्तिबृन्दम् । तत्तदुपाधिशक्तयो बृन्दीयन्ते यस्मिन्तत शक्तिबृन्दम् । तृतीयविमर्शे वक्ष्यमाणचक्रलक्षणोपेतं सर्वशक्तिबृन्दरूपमित्यर्थः । त्वन्मुखं यदस्ति तत त्वन्मुखमेव । पदादिभिश्चतुस्त्रिकैः पदं जाग्रत आदिः येषां चतुस्त्रिकाणां तैः जाग्रज्जाग्रत, जाग्रत्स्वप्न,जाग्रत्सुषिप्ति । स्वप्न-, जाग्र,त्स्वप्नस्वप्न,स्वप्नसुपुप्ति । सुप्तिजाग्रत, सुप्तिस्वप्न,सुप्तिसुषुप्ति । तुर्यजाग्रत, तुर्यस्वप्न,तुर्यसुप्तिरूपैः चतुस्त्रिकैः । द्वादशक्रमपदम् । एतदेवोक्तं जयरथनागमवचनमुदाहृत्य "एकं स्वरूपरूपं प्रसरस्थितिलयभेदतस्त्रिविधम् । प्रत्येकमुदयसंस्थितिलयविश्रमतश्चतुर्विधं तदपि" इति । वक्ष्यमाणह्रस्वदीर्घप्लुतात्मक अ इ उ ऋ वर्णपरामर्शरूपैश्च चतुस्त्रिकैः । द्वादशक्रमैः पदैः पद्यते गम्यते सृष्ट्यादितत्त्वं प्राप्यते च स्वरूपतत्त्वमत्रेति द्वादशक्रमपदम् । जृम्भितं बृंहितमिति पाठे– षोडसप्तदशाष्टादशैकविंशत्यर्णस्वरखण्डान्तवाक्क्रमरूपेण "दश हस्त्या अंगुलयो दश पद्या आत्मैकविंश:" "द्वादशमासाः पंचर्तवस्त्रय इमे लोका असावादित्य एकविंश:" इत्यादि श्रुत्युक्तान्तर्बहिःपूरुषकालक्रममयत्रिपुटीवागर्थक्रमे गायत्र्यादिबृहतीपर्यन्ततया च चातुर्वर्ण्योत्तरसप्तछन्दोरूपेणापि वर्धितमित्यर्थः । भात्मकमिति कालीमुखविशेषणसूचितनाक्षत्रकालमानपक्षेपि एकैकनक्षत्रस्य पादचतुष्टयात्मकत्वेन द्वादशराशिचक्रघटकीभूतैकैकराशेः नवनवपदात्मकनवांशचक्रात्मकत्वेन च चित्रानक्षत्रेण युक्ता पौर्णमासी चैत्रीत्येवंरूपव्यावहारिकचान्द्रमानेपि कालीमुखं भात्मकमेव । तथा मेषवृषभमासादिराशिमासनामव्यवहारेण व्यावहारिकसौरमानेपि भात्मकमेव । संवत्सरयुगादिरूपं कालीमुखं शक्तीनां सूर्यकिरणमरीच्यात्मककालशक्तीनां बृन्दरूपम् । तुर्यधा अयनद्वय-

विषुवसंक्रान्तिद्वयसमष्ट्यात्मना । चतुर्धा । चत्वारि त्रिकाणि मासत्रयसमष्टिरूपाणि तैश्चतुस्त्रिकैः पदादिभिः । एकैकमासत्रिकस्य द्वाभ्यां हरिपदषडशीतिमुखनामकसंक्रान्तिभ्यां सहाऽयनेन विषुवसंक्रान्त्या वा सन्दंशितत्वेन सम्पद्यमानत्वाच्च चतुस्त्रिकैः द्वादशक्रमं सत् द्वादशमासात्मकं सत् तुर्यधा गमयति कालरूपं चेति तुर्यधागमं सत जृम्भितं बृंहितं वा भवतीति द्वादशक्रमोऽयमेवाग्रेऽपि तृतीयविमर्शे विव्रियत इतीह विरम्यते । अनेनैव क्रमेण चतुर्युगसहस्रान्तब्राह्मदिनपर्यन्तकालमानसमन्वयः भूतभौतिकचतुर्विधवाग्वर्गसमन्वयश्च यथासम्भवमूहनीय इति संक्षेपः ॥१४-३६॥

एवमनाहतवागर्थपुरुषविभवं दिग्देशकालसामरस्येन व्याख्यायाऽऽहतवागर्थविभवेऽपि वक्ष्यमाणबृन्दचक्रोपासनोपयुक्तधामसंविद्वर्णक्रमपूर्वकं प्रकाशानन्दमूर्तिनामकचकूत्रयसामरस्येन आहतमातृकार्णोत्पत्तिमपि व्याचिकीर्षन्तत्र पूर्वोक्तमातृमेयमाननेतृतया विकल्पबुद्धिप्रेरकाणामग्निसूर्यसोमानामनाहतवागर्थबिन्दुरूपतां लक्षयति—

मानमेयमितिनेतृलक्षणा
सोमसूर्यदहनास्त्रिधामगाः ।
राशिराजिविधिभङ्जितैः स्वरै-
र्लक्षितास्तव हि विष्टपेऽम्बिके ॥३७॥

मानमेयत्यादिना । हे अम्बिके! मानमेयमितिनेतृलक्षणाः । द्वन्द्वान्तपदं प्रत्येकं सम्बध्यत इति न्यायात् । माननेता सोमः । मेयनेता सूर्यः । मितिनेता दहनः । तेषां यथाक्रमं सुषुप्तिस्वप्नजाग्रदवस्थासु व्यष्ट्यभिमानित्वेन प्राज्ञतैजसविश्वनामकतया समष्ट्यभिमानित्वेनेश्वरहिरण्यगर्भविराडात्मकतया च मानमेयमितिनेतृरूपता । ते च सोमसूर्यदहनाः त्रिधामगाः । यथेच्छं समष्टिव्यष्टिभ्यां वागर्थक्रमयोर्वक्ष्यमाणवदत्रयीप्रमेयकशान्ततेजोगतिमूर्तिमयनादनाधत्रिपुटीधामत्रयं, सुषुप्तिस्वप्नजाग्रदवस्थाधामत्रयं च, गतास्सन्तः । अन्ततः त्रिधा त्रिपुटीभेदप्रकारेण । अमगाः अमां अविद्यकदार्शिकामाकलां । शाम्भववैसर्गिकीं पूर्णानुस्वारात्मि-

कामित्यर्थः । गच्छन्ति प्राप्नुवन्तीत्यमगाः । तथा विद्यामयीमनुत्तराकारसम्पद्रूपां शाक्तवैसर्गिकीं च क्रमेण गच्छन्तीत्यमगाश्च । तृतीयविमर्शे वक्ष्यमाणलक्षणमहाप्रमाणमहाक्षमयीममाकलां प्राप्य तुरीयविमर्शे वर्ण्यमानां शाक्तविसर्गाहमक्षमयीं विद्याविद्यासामरस्यसम्पद्रूपाममाकलां च महाप्रमात्रैक्यप्रतिनिवर्तनक्रमेण प्राप्नुवन्तीत्यर्थः । एवमुक्तक्रमेणेदानींतनव्यष्ट्यभिमानिनः सोमसूर्यदहनाः । अपानप्राणव्यानत्रिपुटीभेदभिन्नाः । राशिराजिविधिभंजितैः राशिः स्वरसमूहः तस्माद्राजिविधिना पंक्तिविधानेन भंजितैः राशितः पृथक्कृतैः स्वरैः अकारइकारउकारादिरूपैः । लक्षिताः संजातलक्षणाः । तत्र क्रमेण महाकालीमहालक्ष्मीमहासरस्वतीरूपिण्यः । विप्रुषोहि शीकरा एव हि । अत्रेयं स्वरोत्पत्तिप्रक्रिया । पूर्वस्मिन्कल्पे अन्तर्लीनविमर्शशक्तिकः सुषुप्त्यभिमानी अनुत्तरनादिनाधात्मा चन्द्रः स्वोपाधिभूतानुत्तरनादिनादस्वरूपसमष्टिसुषुप्तेः बहिरुत्थायानुत्तरोऽक्षरविमर्शात्मना स्यामिति यदाऽकामयत तदानीमकारोत्पत्तिः । स एवाऽकारोन्तरनुभूतानुत्तरनादानन्दं बहिरप्याशासानो दीर्घाऽऽकारेण यदा परिणमति तत्समकालमेव तदीयेच्छाबोधक इकारस्तदुन्मेषबोधक उकारश्च सम्भवतः । तदा विनेशनमिच्छाया अन्तःक्रियाशक्त्यात्मकोर्मि विना उन्मेषस्य च आनन्दं विना अनुत्तराकारस्येव विश्रान्तिस्थानत्वायोगादीशनोर्म्योरेव ईकारऊकारदीर्घस्वररूपेण परिणामश्च । एवमन्तर्बहिरभेदभेदत्रिपुटीद्वयबोधकह्रस्वदीर्घस्वरत्रिकयुगले प्रातिस्विकमप्यन्तरक्षसामरस्यात्मना प्रमातृरूपता । बहिर्ह्रस्वदीर्घवर्णयुगलात्मना प्रमाणप्रमेयरूपता, चैवमेव प्रत्येकधामस्वरूपताप्यनुभवैकवेद्या चेत्येवमितरेषामप्युन्नेयम् । अवशिष्टदशस्वरसृष्टिप्रक्रिया तत्प्रसङ्गेन सकलमातृकावर्णोत्पत्तिप्रक्रियापि तन्त्रसारे शाम्भवोपायनिर्णयप्रस्तावे ह्येवमेवाभ्यधायि "तत्र मुख्यास्तावत्परमेश्वरस्य तिस्रश्शक्तयः । अनुत्तरः इच्छा उन्मेषश्चेति । तदेव परामर्शत्रयम् । 'अ इ उ' इति । अतएव माहेश्वरसूत्रेष्वपि । 'अ इ उण्' इत्येव सूत्रारम्भः कृत इति श्रीनन्दिकेश्वरकारिकास्वपि सोपपत्तिको निर्णयः कृत इति बोद्धव्यम् । एत-

स्मादेव परामर्शत्रयात्सर्वशक्तिप्रपञ्चः चर्च्यते । अनुत्तर एव हि विश्रान्तिरानन्दः । इच्छायामेव विश्रान्तिरीशनम् । उन्मेष एव विश्रान्तिरूर्मिः । यः क्रियाशक्तेः प्रारम्भ उच्यते तदेव परामर्शत्रयम् । 'आ ई ऊ' इति । अत्रच प्राच्यं परामर्शत्रयं प्रकाशभावसारत्वात्सूर्यात्मकम् । चरमं विश्रान्तिस्वभावाह्लादप्राधान्यात्सोमात्मकम् । इयति यावत्कर्मांशस्यानुप्रवेशो नास्ति यदा तु इच्छायामीशने च कर्मानुप्रविशति यत्तदिष्यमाणमीश्यमानमिति चोच्यते तदास्य द्वौ भेदौ । प्रकाशमात्रेण रश्रुतिः । विश्रान्त्या लश्रुतिरिति । रलयोः प्रकाशस्तम्भस्वाभाव्यात् । इष्यमाणं च न बाह्यवत् स्फुटम् । स्फुटरूपत्वे तदेव निर्माणं स्यात् । न इच्छा ईशनं वा । अतोऽस्फुटत्वादेव श्रुतिमात्रं रलयोः । न व्यंजनवत् स्थितिः तदेतद्वर्णचतुष्टयमुभयच्छायाधारित्वान्नपुंसकम् । 'ऋ ॠ ऌ ॡ' इति । अनुत्तरानन्दयोरिच्छादिषु यदा प्रसरः तदा वर्णद्वयम् । 'ए ओ' इति । अत्रापि पुनरनुत्तरानन्दसङ्घट्टाद्वर्णद्वयं । 'ऐ औ' इति । सेयं क्रियाशक्तिः । तदेतद्वर्णचतुष्टयम् । 'ए ऐ ओ औ' इति । ततः पुनः क्रियाशक्त्यन्ते सर्वं कार्यभूतं यावदनुत्तरे प्रवेक्ष्यते तावदेव पूर्वं संवेदनमात्रसारतया प्रकाशमात्रत्वेन बिन्दुतयाऽऽस्ते । अं इति । ततस्तत्रैव अनुत्तरविसर्गो जायते । अः इति । एवं षोडशकं परामर्शानां बीजस्वरूपमुच्यते । तदुत्थं व्यंजनात्मकं योनिरूपम् । तत्रानुत्तरात्कवर्गः । श्रद्धाया इच्छाया श्चवर्गः सकर्मिकाया इच्छायाः द्वौ टवर्गस्तवर्गश्च । उन्मेषात्पवर्गः । शक्तिपञ्चकयोगात्पञ्चकपञ्चकत्वम् । इच्छायाएव त्रिविधायाः यरलाः । उन्मेषाद्वकारः । इच्छाया एव त्रिविधायाश्शषसाः । विसर्गात्तु हकारः । योनिसंयोगजः क्षकारः । इत्येवमेष भगवाननुत्तरएव कुलेश्वररूपः । तस्य च एकैव कौलिकी विसर्गशक्तिः । यया आनन्दरूपात्प्रभृतीयता बहिःसृष्टिपर्यन्तेन प्रस्पन्दतः वर्गादिपरामर्शा एव बहिस्तत्त्वरूपतां प्राप्ताः । सचैष विसर्गस्त्रिधा । आणवश्चित्तविश्रान्तिरूपः । शाक्तश्चित्तसम्बोधलक्षणः । शाम्भवश्चित्तप्रलयरूपश्च । एवं विसर्गएव विश्वजनने भगवतश्शक्तिः इत्येव-

भियतो यदा निर्विभागतयैव परामर्शः । तदा एक एव भगवान्बीजयोनितया भागशः परामर्शे शक्तिमान् शक्तिश्च भवति । पृथगष्टकपरामर्शे चक्रेश्वरसाहित्येन नववर्गः । एकैकपरामर्शप्राधान्ये पञ्चाशदात्मकता । अत्रापि सम्भवद्भागभेदपरामर्शने एकाशीति रूपत्वम् । वस्तुतस्तु षडेव परामर्शाः प्रसरणप्रतिसञ्चरणयोगेन द्वादश भवन्तः परमेश्वरस्य विश्वशक्तिपूर्णत्वं पुष्णन्ति । ता एवैताः परामर्शाश्शक्तयो भगवत्यः श्रीकालिकाभगवतीरूपेण निरुक्ताः । एत एव परामर्शाः शक्तिरूपाश्शुद्धविद्याविद्येश्वरीरूपतां भजन्ते । मायायां पुनः स्फुटीभूतभेदविभागाः मायीयवर्णतां च भजन्ते । ये पश्यन्तीमध्यमावैखरीषु व्यावहारिकत्वमासाद्य बहीरूपतत्वस्वाभाव्येन यदा दृश्यन्ते । यदा च तेषामुक्तनयैरेतैः जीवितस्थानीयैश्शुद्धैः परामर्शैः प्रत्युज्जीवनं क्रियते तदा ते सवीर्या भवन्ति । ते च तादृशाः भोगमोक्षप्रदाः । इत्येवं सकलपरामर्शविश्रान्तिमात्ररूपं प्रतिबिम्बितसमस्ततत्त्वभूतभुवनभेदमात्मानं पश्यतो निर्विकल्पतया शाम्भवेन समावेशेन जीवन्मुक्तता । अत्रैते श्लोका भवन्ति—'अन्तर्विभाति सकलं जगदात्मनीह यद्वद्विचित्ररचनामुकुरान्तराले । बोधः परं निजविमर्शरसानुवृत्त्या विश्वं परामृशति नो मकुरस्तथा तु' इत्यादिना तन्त्रसारे शाम्भवोपायः वर्णसृष्टिप्रक्रियापरामर्शमात्रपरतया प्रपंचितः । तस्मात्सर्ववर्णानामपि प्रातिस्विकं धामत्रयरूपता बोध्या । एवमग्रेपि धामसंविद्वर्णक्रमाः उपासनोपयोगितया संक्षेपेण विविच्यन्ते च । एवं शब्दोत्पत्तिप्रक्रियायामपि अक्षमालामूलभूतसौम्यस्वरखण्डस्थाकारादिविसर्गान्तचान्द्रस्वराणां षोडशकलाव्याप्तिवत् तन्मूलभूतमनसोपि— १ प्राण २ श्रद्धा ३ आकाश ४ वायु ५ तेजः ६ जल ७ पृथिवी ८ इन्द्रिय ९ मनः १० अन्न ११ वीर्य १२ तपः १३ मन्त्र १४ कर्म १५ लोक १६ नाम- रूपेण कलासु षोडशसंख्यया व्याप्तत्वेन यथा नाममात्रावशिष्टं मनः सुषुप्तौ प्रलये च सर्वाभिः कलाभिस्सहाविद्यकप्राणात्मनि लीयते, तथा केवलनाममात्रावशिष्टश्चन्द्रोपि अविद्यारात्रितुल्ये दर्शे सूर्यात्मनि लीयते । पुनर्वि-

षामयाहनि षोडशकलोपेतं मन इव षोडशकलोपेतश्चन्द्रोपि चिद्यापूर्णिमायामुदीयमानः प्रकाशते च । चन्द्रस्य दार्शिकसूर्यसङ्गमात्मकविलयवदेव मनसो जडसौषुप्तिकजाग्रदवस्थापन्नविश्वमयचेतनप्राणसूर्यसङ्गमलयोपि पुनर्जन्मप्रदः। तथा चन्द्रस्य सङ्कर्षणाग्निमूर्तिसङ्गम इव मनसोपि मुख्यप्राणसूर्ये चिदग्निमूर्तिसङ्गमः अनावृत्याख्यमोक्षप्रदश्च । अतएव देवीमानो षोडशमासात्मकसंवत्सरकालचक्रावयवानामेव आत्मनि षोडशकलात्मक सूक्ष्ममनोरूपेण षोडशसंख्यया मनोबुद्धियुक्तदशेन्द्रियस्थूलरूपेण द्वादशसंख्यया । बहिर्व्यावहारिकसौरचान्द्रमानादिकालपुरुषेपि निमेषकलातिथिवारनक्षत्रयोगकरणप्रभृति अयनद्वयविषुवद्द्वययुक्तद्वादशसंक्रान्त्यात्मना मेषचैत्रमासादिव्यवहारेण च । तथा–"अस्तिवाहि षष्ठऋतुर्नवा" इत्यादिश्रुतिनिरुक्तपञ्चर्तुषड्तुपक्षमतभेदेन । "तथा– षडहैर्मासांत्सम्पाद्याहरुत्सृजन्ति" इतिश्रुतिनिरुक्तषडहसम्मितमासमानादिषु संवत्सरपरिवत्सरान्तदिनमासादिवर्षान्तकल्पानां व्यावहारिकबार्हस्पत्यादिसावनान्तमानानां च पारमार्थिकपित्र्यदिव्यप्राजापत्यवैराजब्राह्मादि मानसामरस्यगणनासंव्यवहारेण देवीमानोक्ततिथिपक्षमासादिगणितसामरस्येच विवक्षिते । तत्र पञ्चपञ्चतिथिसमष्टित्रयात्मकपञ्चदशतिथिमयपक्षद्वयमेलनेन व्यावहारिकचान्द्रसौरसावनात्मकमासशरीरे त्रिंशद्दिनात्मके राकाऽनुमतिभेदभिन्नपूर्णिमायाः सिनीवालीकुहूभेदभिन्नाऽमावास्यायाश्च द्विद्विरूपतया षोडशतिथिसंख्याकैकैकपक्षलाभवदेव देवीमानेपि षट्त्रिंशत्तिथियुक्तमासार्धेऽष्टादशसंख्याकतिथियुतपक्षलाभस्यापि दिननित्याकालनित्याभ्यां सहगणनेन सम्भवमानत्वाच्च। एवं संवत्सरात्मकल्पककालपुरुषतत्त्वयोरपि चान्द्रसौरसावनादिप्राकृतमानभेदेषु यथायोनि यथेच्छं च प्राकृतमासार्धमासतिथिगतद्वादशचतुर्विंशतिषोडशाष्टादशादिदिनसंख्यानामिव पारमार्थिकदिव्यमानवप्राजापत्यब्राह्मापरपर्यायदेवमानेष्वपि मासार्धमासतिथिषु क्रमेण षट्त्रिंशदष्टादशादितिथिवासरत्र्यादिसंख्यालाभस्य वत्सरपरिवृत्तियुगायनपूर्णमण्डलान्तदेवीमानपरिभाषयाऽष्टाङ्कद्वादशषोडशाङ्कगणितलब्धत्वाच्च "षडहेन यन्ति । षड्वा ऋतव ऋतु-

ष्वेव प्रतितिष्ठन्ति । द्वौ षडहौ भवतस्तानि द्वादशाहानि सम्पद्यन्ते । द्वादशो वै पुरुषो द्वे सक्थ्यौ द्वौ बाहू आत्मा च शिरश्च चत्वार्यङ्गानि स्तनौ द्वादशौ" "षोडशकलो वै पुरुषः" "तत्पुरुषमनुपर्यावर्तन्ते त्रयष्ष-डहा भवन्ति तान्यष्टादशाहानि सम्पद्यन्ते नवान्यानि नवान्यानि नव वै पुरुषे प्राणास्तत्प्राणाननुपर्यावर्तन्ते चत्वारष्षडहा भवन्ति तानि चतुर्विं-गृंशतिरहानि सम्पद्यन्ते चतुर्विंगृंशतिरर्धमासास्संवत्सरस्तत्संवत्सरमनुपर्या-वर्तन्तेऽप्रतिष्ठितस्संवत्सर इति खलु वा आहुर्वर्षीयान्प्रतिष्ठाया इत्येतावद्वै संवत्सरस्य ब्राह्मणं यावन्मासो मासि मास्येव प्रतितिष्ठन्तोयन्ति" इत्यश्व-मेधाद्युत्तरक्रतुप्रकरणे तैत्तिरीयसंहितायां सप्तमकाण्डे चतुर्थप्रश्ने एकाद-शानुवाकोक्तपुरुषकालकल्पविभवयोस्साम्येन वागर्थव्यवहारमूलत्वं वक्तु ल-क्षिता इत्युक्तमिति वागर्थकल्परहस्यम् । अतएव सामिधनीब्राह्मणे पञ्च-दशसामिधेनीसंख्यासंप्रतिपन्नत्रिपाद्गायत्रीछन्दस्कानामृचामक्षरसंख्यानेन व-त्सराहोरात्रसमसंख्याकत्वेन वत्सरदेवतावाप्तिफलमपि कण्ठोक्तम् "तासां त्रीणि च शतानि षष्टिश्चाक्षराणि तावतीस्संवत्सरस्य रात्रयोक्षरश एव सं-वत्सरमाप्नोती"ति सौन्दर्यलहर्यां श्रीशङ्करगुरुपादानां "क्षितौ षट्पञ्चाश-द्द्विसमधिकपञ्चाशदुदके हुताशे द्वाषष्टि श्चतुरधिकपञ्चाशदनिले । दिवि द्विष्षट्त्रिंशन्मनसि च चतुष्षष्ठिरिति ये मयूखास्तेषामप्युपरि तव पादाम्बु-जयुगम्" इति देवीपादाम्बुजस्तावकं वचनम् । मानसोल्लासे च—"द-शापञ्चकभेदेन प्रपञ्चस्य विलासिनः । साष्टिणी चाक्षरी यस्मात्तस्मात्प-ञ्चदशाक्षरी" तथा "पातालपादमवनीजघनं रवीन्दुवक्षोजशालिहरिदाननम-भ्रकेशं । वैराजमम्ब! भजतां तव दिव्यरूपं कीटायते हरिविधीन्द्र-सुरादिकोटिः" इत्यादिमहाकविकालिदासादिवचनं च मूर्तिस्तावकं एतस्मिन्नेवार्थे वागर्थयोरन्योन्यगर्भिगर्भभावतात्पर्यकमेवेत्यलं शाखाचङ्क्र-मणेन ॥१९--३७॥

एवं बिन्दुत्रयात्मकाहतानाहतकालीकालकल्पयोर्वागर्थयोः गर्भिगर्भ-

भावं लक्षयित्वा तस्यैव सृष्टिस्थितिसंहारकालिकवाच्यवाचकसम्बन्धेनानुत्तरप्रणवतयाऽभेदभावमपि साधयति—

आहतेतरदुरुत्तराश्रय
स्त्वत्पदादुदयते शिवात्म (त्मि) के ।
अद्वयाद्विषयचित्प्रथातनु
र्दग्विमर्श इह (व) वाचकः स्वरः ॥३८॥

आहतेत्यादिना । आहतेतरदुरुत्तराश्रयः । आहतस्सृष्टिकालिकः । इतरः स्थितिकालिकमनोविमर्शरूपत्वेनाऽनाहतरूपः । दुरुत्तरः दुःखमुत्तरयति पुनर्जननमरणसंसाराख्यमिति वा । दुःखाज्जननमरणाख्यसंसाराद् तारयतीति वा दुरुत्तरः । मरणाख्यसंहारकालिकतार्तीयाज्ञानोपाधिकः । अमृताख्यशिवज्ञानसंसारकालिकतुरीयानन्दोपाधिकोवा । तेषामाहतेतरदुरुत्तराणामाश्रयः सृष्टिस्थितिसंहारतुरीयावस्थाकालिकप्राणस्पन्दात्मक इत्यर्थः । अतएव शिवात्मके "ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ" इत्युक्तमङ्गलप्रणववाच्यार्थरूपे । अधिकरणभूते दहराकाशे इत्यर्थः । शिवात्मिके इति पाठे– मङ्गलवाचकप्रणववाग्रूपिणि हसर्वमङ्गले इति कालीसम्बुद्धिरित्यर्थः । विषयचित्प्रथातनुः । विषयचित्प्रथां विषयज्ञानविस्तृतिं तनोति विस्तारयति प्रथमं, पश्चात्क्षपयति चेति विषयचित्प्रथातनुः । प्रथमं स्वात्मभेदेन विषयबुद्धिप्रदः पश्चात् विमर्शबलेन पूर्वं भेदेन दृश्यमानस्यापि विषयस्याभेदबुद्धिप्रदश्चेति तात्पर्यार्थः । दृग्विमर्श इव ज्ञानविमर्श एवेतीवशब्द एवकारार्थकः । अथवा अस्फुटविमर्शत्वात् ज्ञानविमर्शतुल्य इत्यस्फुटार्थवाचकत्वेन ईषत्सादृश्यवाचको वा । एतेन विमर्शस्य ज्ञातृधर्मत्वं सूचितम् । इहेति पाठे– इह पूर्वश्लोकलक्षितत्वदीयविष्पृणमयमण्डलत्रये विषये इत्यर्थः । वाचकः प्राणस्पन्दात्मकवक्तृव्यापाराभिन्नरूपः । स्वरः स्वतो राजमानः रञ्जको वा ओङ्काराख्यप्रणवनादरूपो ध्वनिविशेषः । अद्व-

यात् स्वपदात् । अद्वयदहरात्मकहृदयाकाशस्थानात् । उदयते ह्रस्वदीर्घप्लुतरङ्गप्लुतान्तचातुर्मात्रनादात्मना आविर्भवति । उच्छ्वासनिःश्वासात्मकप्राणस्पन्दस्य चित्तप्रबोधशाक्तविसर्गस्थानीयसकारहकारयोस्सामरस्योच्चारणात्मकत्वेन सबिन्दुके तस्मिन्नेवोच्चारे सोऽहमित्याकारे हल्वर्णाद्वयोस्सकारहकारमात्रयोः परित्यागे प्रणवावशेषात्तस्य च सृष्टिस्थितिसंहारेषु वागर्थोभयात्मनाप्येकरूपत्वादजपप्राणस्पन्दे स्थानप्रयत्नाद्यभावाच्चानाहतोदीयमानस्वरत्वं । उदयते इत्यात्मनेपदि प्रयोगेणोदयात्मकक्रियाफलस्यात्मगामित्वावगमात्सदा तस्य साक्षित्वमपीति च सूचितम् । अतएव प्रणवोत्पत्तिप्रकारेप्येवमाम्नातः "मूलाधारादकारः स्फुरति लघुपथं नाभिरन्ध्राद्धुकारो मध्यस्थाने मकारश्शशिकिरणवशात्कण्ठतो बिन्दुरस्मात् । नादो मध्याच्च शक्तिश्शिरसि च गदितश्शान्तिमद्वादशान्ते ओङ्कारो ध्यानरूपो रविरिव जगतां नायको विश्वमूर्तिः" इति ॥१६-३८॥

एवं कृत्यत्रयवाच्यवाचकवाग्भावापन्नस्य अनाहतप्रणवनादस्य कृत्यपञ्चकाहतानाहतभावमपि वर्णयन् तदीयपञ्चवाहताक्रमेणापि विश्वमयविश्वोत्तीर्णशब्दशरीरकसाधकधौरेयशिवस्यादिनाथपरशिवभट्टारकस्येव कामकलारूपतां महाकालीमात्रवेद्यतां च पाठभेदेन दर्शयति—

**अम्ब! धामकरणप्रयत्नजो**
**वैखरः स्फुरति शब्द आहतः ।**
**मानसः पुनरसावनाहतो**
**वासितस्त्वदुपलक्ष्यवि (त्तरः) त्तमः(उत्तरः) उत्तमः ॥३९॥**

अंबेत्यादिना । हेअम्बेति सम्बुद्धिः पूर्ववत् । धामसु कण्ठताल्वोष्ठादिस्थानेषु । अन्यत्र वीणावेणुमृदङ्गादिषु च । करणैः संवृतविवृतकरणादिभिरान्तरव्यापारैः । अन्यत्र तन्त्रीनखाङ्गुलिताडनादिवाद्यसाधनव्यापारैश्च । प्रयत्नेन आभ्यन्तरबाह्यादिकृतिरूपेण । अन्यत्र गुरुशिक्षाशिष्याध्ययनादिरूपप्रयत्नेन च जायमानः । धामकरणप्रयत्नजः । आहतः आत्मविद्याकलादिनैश्रेयसाभ्युदयकमार्गान्यतररूपेण आ समन्तात् क्षुण्णः ।

अन्यत्र उभयमार्गभ्रंशेनासमन्तात् हतः दग्धप्रायश्च । अतएवोक्तं वेदाङ्ग-शीक्षायां "मनः कायाग्निं माहन्ति स प्रेरयति मारुतम्" इत्यारभ्य "कुतीर्थादागतं दग्धमपवर्णं च भक्षितम् । एवमुच्चारणं पापमेवमुच्चारणं शुभम्" तथा "सुतीर्थादागतं व्यक्तं स्वाम्नायं सुव्यवस्थितम् । सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म जायते" इति ॥ अतएव वैखरः वै निश्चयेन खं श्रोत्रविवरं राति गृह्णातीति वैखरः । स्वगुर्वनूच्चारणतः आहतशब्दत्वादेव वेदोपवेदादि विद्यारूपः । अन्यत्र विकृतविलक्षणगर्धभस्वरानुकारित्वेन श्रुतिकटुतया निन्द्यरूपश्च । शब्दः स्फुरति प्रकाशते । असौ पुनः अनाहतः । पूर्वोक्तद्वितीयदग्धप्रायत्वलक्षणविहीनः । अर्थक्रमे शाब्दक्रमे च "आत्मा स्वतस्समेत्यार्थान्मनो युङ्क्ते विवक्षया । मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्" इत्युक्तप्राणस्पन्दात्मनाऽव्यक्तनादरूपस्सन् मानसः शाक्तविसर्गतादात्म्यभावेन मनस्येव विश्रान्तः । यद्वा, असौ आहत एव आत्मविद्याकलादिनैश्श्रेयसाभ्युदयकमार्गयोरन्यतरमार्गे प्राथमिकाहतलक्षणाम्रेडनेन क्षुण्णशरीरकश्शब्दः । मानसः मनस्येव शाक्तविसर्गवासनात्मना विश्रान्त इति वा । (साक्षादनुभूतस्वस्वरूपस्सन् अनाहतः हृदयोद्योगसन्तानात्मना "तस्मात्पुत्रो हृदयं । तस्मादस्माल्लोकादमुं लोकं नाभिकामयन्ते । पुत्रोहि हृदयं" इति तैत्तिरीयब्राह्मणे २ काण्डे १ प्रश्ने सप्तमानुवाकोक्त्या चित्तविश्रान्तिलक्षणाणवविसर्गज्ञानसन्तानात्मना पुत्ररूपो भवतीति वा अर्थः) अतएव हृदयोद्योगरूपजीवात्मकशब्दशक्तेः अयज्ञार्थत्वेन देवान्परित्यज्य वनस्पतिष्वनुप्रवेशः । आहतरूपाया अपि तस्याः हृदयोद्योगरूपेण पुंनामनरकात् त्राणसामर्थ्यरूपपुत्रत्वज्ञानधर्मेण स्वस्वरूपानन्दलाभपुरुषार्थावाप्तिसहायता च सोमयागप्रकरणे दीक्षितदण्डप्रदानावसरे ब्राह्मणपठिता चात्र सङ्गच्छते । तत्र हि तैत्तिरीयसंहितायां षष्ठकाण्डे प्रथमप्रश्ने चतुर्थानुवाके "वाग्वै देवेभ्योऽपाक्रामद्यज्ञाया तिष्ठमाना सा वनस्पतीन्प्राविशत्सैषा वाग्वनस्पतिषु वदति या दुन्दुभौ या तूणवे या वीणायां यद्दीक्षितदण्डं प्रयच्छति वाचमेवावरुन्धे" इति । असावनाहतोपि शब्दः

वासितः त्वदुपलक्ष्यः, त्वदुपलक्ष्यवित्, त्वदुपलक्ष्यवित्तरः । इति । त्वदुपलक्ष्य उत्तरः । त्वदुपलक्ष्य उत्तम इति पाठान्तरपाठभेदपक्षेपि वा चतुर्विधः पञ्चविधः वा सन् आहतशब्द इव स्फुरति । चतुर्विधस्फुरणपक्षे । वासितः वासनारूपेण स्थितः । परावाग्रूपशब्दः । त्वदुपलक्ष्यः । पश्यन्त्यात्मना त्वदेकवेद्यः । ततो मध्यमावाग्रूपेण बहिः स्फुटन् । त्वदुपलक्ष्य एव त्वदुपलक्ष्यवित् । वेत्तीति वित् । विद्वान् विद्यात्मना स्वरूपतत्त्वविचारकशब्दरूप इत्यर्थः । त्वदुपलक्ष्यश्चासौ विच्चेति त्वदुपलक्ष्यवित् । असम्पूर्णभावेन त्वत्स्वरूपतत्त्ववेदी भवति । ततोपि वैखरीवाग्रूपेण बहिस्सुव्यक्तशब्दरूपस्सन् त्वदुपलक्ष्यविदेव त्वदुपलक्ष्यवित्तरोपि भवति । एवमयं चतुर्विधस्फुरणपक्षः । पञ्चविधस्फुरणपक्षेपि, महार्थमञ्जरीपरिमले चत्वारिंशद्गाथाविवृतिग्रन्थसन्दर्भेचरमभागे— "१ नष्टार्थचतुष्कावभासनम् २ लीनमेयत्रयवासनानुवृत्तित्वम् ३ मेयमानवस्मरवेत्तृत्वम् ४ सविकल्पकमेयविमर्शः ५ निर्विकल्पकमेयावभासः" इति सृष्ट्यादिभासान्तपञ्चार्थक्रमापरपर्याये यः पञ्चार्थक्रमो निरूपितः । तदभेदात्मना नष्टार्थचतुष्कावभासनापरपर्यायस्वात्मतत्त्वविमर्श एवात्र प्रथममनाहतशब्दनाम्ना विवक्षितः । स च विमर्शपरिपाकेन लीनमेयत्रयवासनानुवृत्तितया वासितो बिन्दुत्रयरूपेण परिणमति । ततोपि विमर्शपरिपाकेन मेयमानवस्मरवेत्तृतापरपर्यायप्रमेयप्रमाणपरस्परभक्ष्यभक्षकस्वाभाव्येन आणवशाक्तानुत्तरविसर्गात्मकाऽव्यक्तनादरूपेणापि परिणमति । ततोपि बहिः सविकल्पकमेयविमर्शापरपर्यायसंस्कारसंस्कृतनादात्मना स्फुटन् मध्यमावाग्रूपेण स्फोटतामाप्नोति । ततोपि पुनर्वैखरीशब्दापरपर्यायनिर्विकल्पकमेयावभासरूपेण स्वात्मविमर्शरूपतामेवाप्नुवन्बहिर्वैखरीरूपेण भासमानोपि नादनायसामरस्येन स्वानन्दविश्रान्तः स्वात्मरूप एव भवतीति पञ्चविधशब्दस्फुरणरहस्यम् । तदुभयमपि श्रुत्यागमाभ्यां स्फुटमुपदर्शितम् "चत्वारि वाक्परिमिता पदानि । तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति । तुरीयं वाचो मनुष्या वदन्ति" इति श्रुत्या शब्दचातुर्विध्यस्फुरणम् । "विमर्शो बिन्दु-

नादौ च स्फोटश्शब्दश्च वाक्क्रमः'' इत्यागमेन पांचविध्यस्फुरणञ्च । उत्तार इति पाठे– उत्तीर्यते विश्वमयस्साधको विश्वोत्तीर्णतास्वाभाव्येनास्मादित्युत्तार इति। तथा उत्तम इति पाठेपि उन्निद्रितमातृकाकुण्डलीस्वरूपावभासेनोद्गततमस्को भवत्यस्मादित्युत्तम इति चार्थः । एवमग्निपुराणे त्रयोदशाध्यायेपि– "नाडीचक्रं प्रवक्ष्यामि'' इत्यारभ्य प्राणापानादिशब्दनिरुक्तिपूर्वकमनाहतनादोपासनोपयुक्तपञ्चविधशब्दोपासनाक्रमः नाडीचक्रस्यापि शब्दाभेदसमन्वयपूर्वकं वर्णितस्तत्रैव द्रष्टव्यः । किंचात्र "सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे । विन्दते विन्दति प्राप्तौ'' इत्युक्तविद्ऌ धात्वर्थभेदा एव । "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तगूंह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये । इत्युपनिषद्वाक्यबोधितचेतनशब्दब्रह्मावतारात्मकदेवतापीठस्वरूपावबोधाय तदुपदिष्टवेदचतुष्टयात्मना वेदपञ्चकात्मना वा वर्णिता इत्यपि सूक्ष्मदृष्ट्या कलनीयमित्यपि रहस्यम् । वक्ष्यति चाग्रेपि कविरेव तृतीयविमर्शे पीठस्मशानाद्युपासनोपदेशेन अस्मिन्नपि विमर्शे–"त्वं प्रकाशयसि यं ससृज्यसे धर्मिधर्मतनुरर्थ ईश्वरे'' इत्यादिना वागर्थभेदाभेदाभ्यमिममेव चाशयमित्यलं विस्तरेण । अर्थक्रमेपि पञ्चविधशब्दादिस्फुरणं चतुर्थविमर्शे–"अर्थपञ्चकसुधाप्रपूरिते'' इत्येतत् श्लोकव्याख्यानावसरे स्फुटमुपपादयिष्यत इति नेह विविच्यते ॥१८-३९॥

एवमनाहताहतवागर्थनादसामरस्यं विविच्य तदीयमातृकास्वरखण्डस्य पूर्वतमश्लोकवर्णितमानमेयमितिनेतृलक्षणधामत्रयकलारूपतया परस्परयोनिबीजधर्मद्वयतात्पर्येण स्वतो राजनरञ्जनात्मकधर्मद्वययोगेन च स्वरूपतां दर्शयति—

षण्ढवर्जमहिमद्युतेः कला
　　स्सर्गबिन्दुरहिता श्च ये शु (भे) चेः ।
सर्वएव शशिनः कला शिवे
　　योनयो विधृतबीजत (त्परा:) स्वरा: ॥४०॥

षण्डवर्जमित्यादिना । हे शिवे! मङ्गलेच्छास्वरूपिणीति सम्बुद्धिर्वा । मङ्गलेच्छारूपे साधकशिवे इत्यधिकरणविवक्षया सप्तमी वा । षण्डवर्जं पूर्वोक्त ऋ ॠ ऌ ॡ इत्याकारकप्रकाशविमर्शोभयछायाधारिस्वरचतुष्टयात्मक-षण्डस्वरान्विनेत्यर्थः । अवशिष्टाः कलाः अहिमद्युतेः सूर्यस्य भवन्तीति शेषः । तत्रापि द्वादशस्वरकदम्बे । सर्गबिन्दुरहिताः विसर्गबिन्दुभ्यां रहिताः ये अवशिष्टाः सहार्धबिन्दुना एकादशस्वरा वा । विसर्गपूर्णानुस्वारात्मकबिन्दुत्रयेण रहिताः दशस्वरा वा । ये ते शुचः अग्नेः कला भवन्ति । शुभे इति पाठे— मङ्गलरूपे साधकात्मके शिवाग्नौ कला भवन्तीत्यर्थः । सर्व एव स्वराः षोडशापि स्वरा इत्यर्थः । शशिनः चन्द्रस्य कलाः । विधृतबीजतत्पराः । विलक्षणं यथाभवति तथा धृतबीजेषु पूर्वोक्तत्रिविध-षड्विधद्वादशविधादिपरामर्शरूपेषु । वक्ष्यमाणयोनिमहायोनिशब्दपर्यायदि-व्ययोनिरूपेषु वा । विविधं यथा भवति तथा वा । धृतबीजेषु पूर्वोक्त-अ इ उ परामर्शरूपाभि स्तिसृभिः मूर्तिकलाभिस्सह अष्टात्रिंशत्सं-ख्याकेषु ताभिर्विना कादिक्षान्तपञ्चत्रिंशत्संख्याकेषु वा बीजवर्णेषु तत्पराः तात्पर्यवन्तः सर्वएव स्वराः शशिन एव कलाः । विधृतबीजतत्स्वरा इति पाठे— विधृतानि यानि बीजानि कादिक्षान्तपञ्चत्रिंशत्संख्याकाक्षररूपाणि । तत्स्वराः तद्बीजाक्षरसुखोच्चारणार्थाः । ये स्वराः ते सर्वेऽपि शशिनः चन्द्र-स्य व्यावहारिकपारमार्थिकमूर्तिद्वयात्मकानुत्तराकारह्रस्वदीर्घस्वरद्वयात्मकस्य सादाशिवचन्द्रस्य कला एवेत्यर्थो वेदितव्यः । ताश्च विना तदीयव्यावहारिकमूर्तिकलाभ्यां त्रयस्त्रिंशत्संख्याकाः । ते च मूर्तिकले सप्तमातृकावर्गसप्तकारकात्मिकासु सप्तकृत्तिकासु कर्तृकर्मकारकान्यतरात्मिका अम्बानाम्नी एका स्त्रीमूर्तिकला । अन्यात्वभिजिन्नक्षत्रापरपर्याया कर्त्रधिकरणान्यतरकारकात्मिका पुरुषमूर्तिकला । अतएवोक्तं श्रुतावपि नक्षत्रनामवर्णनमेतासां सप्तसंख्याककृत्तिकामूर्तीनां महाग्निकचयनकाण्डे, तैत्तिरीयसंहितायां तुरीयकाण्डे तुरीयप्रपाठकपञ्चमानुवाके, ब्राह्मणे च प्रथमकाण्डे, पुनर्द्वितीयकाण्डे च संहितायां "अम्बादुलानितत्निरभ्रयन्ती मेघयन्ती वर्षयन्ती

चुपुणीकानामासि" इति ॥ सप्तकृत्तिकानां तथा "ब्राह्मणो वा अष्टाविंगूंशो नक्षत्राणां" तथा "अभिजिन्नाम नक्षत्रं । उपरिष्टादषाढानां । अवस्ताच्छ्रोणायै" तथा "प्रजापतेस्त्रयस्त्रिगूंशद्दुहितर आसन् तास्सोमाय राज्ञेऽददात्तासागूं रोहिणी मुपैत्" इत्यादिषु अक्षराणामेव दक्षसुतात्वाभिसन्धिरिति रहस्यम् ॥१८-४०॥

एवं स्वरव्यञ्जनापरपर्यायबीजयोनिसंज्ञाभेदभेदिता सर्वापि मातृका पशुपतिना वक्ष्यमाणलक्षणपश्वनुग्रहेण सम्पादितं त्वदीयक्रियामयं पूर्वोक्तपरमैश्वर्यलक्षणं गुप्तिभाषितजगद्विजृम्भणेन विजृम्भितं पारमेश्वरं शरीरमेवेत्याह —

**बीजयोनिविधिभेदभेदिता**
**मातृका (मनुज) सुकृत) मातृलक्षणा ।**
**शक्तिरम्ब! भवति क्रियामयी**
**त्वत्तनुर्जयति पारमेश्वरी ॥४१॥**

बीजयोनीत्यादिना । हेअम्ब! बीजयोनिविधिभेदभेदिता । बीजविधिः । विनापि योनिसंयोगं स्वयंराजमानानन्दमयत्वापरपर्यायस्वरस्वरूपः । योनिविधिर्नाम शाक्तानुत्तरविसर्गापरपर्यायमहायोनेरपि कामशास्त्रोक्तमर्यादया स्वतो विसृष्टिसुखाभावेन बिन्दुमयशाम्भवानुत्तरविसर्गबीजसंयोगापेक्षमेव स्वयंराजमानानन्दमयत्वापरपर्यायं स्वरत्वमिति तत्कार्यभूतकादिक्षान्तयोनिवर्णव्यञ्जनानां कैमुतिकन्यायसिद्धं स्वयंप्रकाशता रूपानन्दपारतन्त्र्यमित्यानन्दपारतन्त्र्यरूपो योनिविधिः । एतदेवाभिप्रेत्य गीतासु - "सर्वयोनिषु कौन्तेय! मूर्तयस्सम्भवन्ति याः । तासां ब्रह्ममहद्योनिरहं बीजप्रदः पिता" इति । तेन बीजविधिना योनिविधिना च भेदेन भेदिता सञ्जातभेदा । मातृका व्यक्तध्वनिमयवर्णमालारूपिणी । अन्यत्र बीजयोनिविधिः 'सवर्णां यवीयसीं लक्षणवतीमुद्वहे' दित्यादिशास्त्रीयवैधानुष्ठानरूपाष्टविधविवाहबीजयोनिविधिभेदेन । तथा कामशास्त्रोक्तशशवृषाश्वादिपुरुषजातीयबीजविधिना । पद्मिनीशङ्खिनीचित्रिणीहस्तिन्यादियोनिविधिना ।

"अनुकूलो दक्षिणश्च धृष्टश्शठ इति स्मृतः" इत्यादिचतुर्विधशृङ्गारनायकबीजविधिना स्वीया परकीया सामान्या पुनर्भूरित्यादिनायिकाजात्यादिभेदिताष्टविधशृङ्गारनायिकालक्षणयोनिविधिभेदेन च भेदिता । सञ्जातजात्यादिभेदा भाषामातृका । मातृरूपिणी नारी च । मनुजमातृलक्षणा 'मन ज्ञाने' इति धातोः मनवः ज्ञानहेतवो मन्त्राः । तेषां तज्ज्ञानां च जनि जन्मनोर्विषये । मातृलक्षणा । माति अपरिच्छिन्नमात्मानं विभवं वा परिच्छिनत्ति नाममन्त्रादिरूपेणेति मा । वागर्थलक्ष्मीः । तरति नादात्मकपूर्वस्वरूपं विहाय वर्णभूमिं प्रत्यवतरतीति तृ । मा च ताच मातरौ प्रकृतिपुरुषौ । तौ लक्षयतीति वा तावेव लक्षणं यस्यास्सेति वा मनुजमातृलक्षणा । अन्यत्राप्येवमेव मनुजानां मनुसन्ततिरूपाणां मानवानां मातृलक्षणा जननीरूपिणी च सती । पारमेश्वरी । परमेश्वरीपरमेश्वरमिथुनसम्बन्धिवागर्थव्यापाररूपिणी क्रियामयी शक्तिः । अन्यत्र गुर्वोघपंक्तिरूपेण परमेश्वरीपरमेश्वरमिथुनप्रापिका । परमैश्वर्यप्रापिका वा पारमेश्वरी च । क्रियामयी शक्तिश्च । त्वत्तनुः त्वं तनोषि सृष्ट्यादिकृत्यपञ्चकमनयेति वा, त्वं तन्यसे कृत्यपंचकात्मना विस्तार्यसे क्षीयसे श्लिष्यसे वा अनयेत्यादिव्युत्पत्तिभेदेन शब्दार्थमयी त्वदभिन्ना तनुः जयति सर्वोत्कर्षेण वर्तते । सुकृतमातृलक्षणेति पाठे-- "तदात्मानग्ं स्वयमकुरुत । तस्मात्तत्सुकृतमुच्यत इति । यद्वै तत्सुकृतं । रसो वै सः । रसग्ं ह्येवायं लब्ध्वानन्दी भवति । को ह्येवान्यात्कः प्राण्यात । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति" इति तैत्तिरीयोपनिषच्छ्रुत्युक्तक्रियामयशाब्दज्योतिः स्वरूपमात्मैव सुकृतशब्दार्थ इति ज्ञेयम् ॥१९-४१॥

एवं पूर्वोक्तदशवह्निकलात्मना नादनवकसमष्टिमहाकारणनादस्य दशप्राणसमष्टिजाठरवैश्वानरस्येव बीजयोर्निविधिभेदेन क्रियामयमातृकाशरीरहेतुतां निरूप्य, कार्यकारणक्रियामयनादनवकत्रिपुटीत्रयसमष्टिहेतुतयाऽभिजिन्नक्षत्रतामपि निरूपयति—

बिन्दुरक्षरमयं क्रियामयं
यो नियन्त्रयति बुद्धिलक्षणः ।
नाद इष्टतनुरन्य (स्य) कारणं
त्वं परे त्रितयधर्मरूपिणि (णी) ॥४२॥

बिन्दुरित्यादिना । हेपरे परावाग्रूपिणीति सम्बुद्धिर्वा । नादात्मके परमात्मनीत्यधिकरणसप्तमी वा । पाठभेदेन समन्वीयते । यो नादः स्वरूपात्मकः इष्टतनुः स्वरवर्णबिन्दुनादकलात्मना रूपपञ्चकेनाङ्गीकृतशरीरः । अतएव बुद्धिलक्षणः । बुद्धिं लक्षयतीति व्युत्पत्त्या ज्ञानमयशरीरः बुद्ध्या लक्ष्यत इति व्युत्पत्त्या क्रियामयशरीरश्च सन् । बिन्दुः बिन्दति स्पन्दतीति व्युत्पत्त्या रूपपंचकमध्यकेन्द्रे ज्ञानक्रियास्पन्दशरीरकबिन्दुरूपस्सन् । अक्षरमयं अविनाशिज्ञानात्मरूपम् । क्रियामयं विनाशिवर्णमयक्रियात्मरूपं च नियन्त्रयति । अक्षरमयं अविनाशिज्ञानमूलकारणरूपेण क्रियामयं कार्यरूपेण अविनाशिवर्णज्ञानमयं च नियमयति । योनियन्त्रयतीत्येकपदान्वयं । नादः स्वयमेव यो नियन्त्रवदाचरतीत्याचारार्थे क्यच्प्रत्ययान्तधातुरूपेणान्वयो वेदितव्यः । त्रितयधर्मरूपिणी । कारणक्रियाकार्यत्रितयधर्मस्वरूपिणी त्वं । अन्यकारणं अन्यस्य क्रियामयस्येव कार्यरूपतापरिणामस्य कारणं हेतुर्भवसि । क्रियामयी मध्ये स्थित्वा स्वात्मानमेव कार्यकारणोभयरूपतया परिणामयसीत्यर्थः । अस्य कारणमिति पाठे । अस्य क्रियारूपस्यैव कार्यत्वेन परिणतस्य नादानुचरस्याकारनादस्य कारणमित्यर्थः । त्रितयधर्मरूपिणि इति ह्रस्वपाठे सम्बुद्धिसप्तम्यन्यतररूपेण परावाग्रूपिण्याः परमात्मनो वा नादरूपस्य विशेषणत्वेन नेयं । तेन कार्यकारणक्रियात्रिपुटीत्रितयसमष्ट्यात्मकनादनाधनवकद्वयसमष्टिधर्मधर्मिणोः पराबाङ्नादात्मनोः कालीकालयोः स्वरूपभेदोप्यैच्छिकधर्मधर्मिभावविनिमयकृतो गजवृषभचित्रन्यायचित्रितएव न वास्तविक इत्यपि सिद्ध्यतीति सर्वमनवद्यम् ॥२०-४२॥

एवमुक्तमहाकारणनादात्मना जगदीशितुर्महाकालस्य वात्या सम्बन्धा-

न्निस्तरङ्गसमुद्रस्येव मध्यस्थस्त्वदीयप्राणक्रियाशक्तिसम्बन्धादेव स्पन्दाविर्भाव इत्याह—

उद्यमः प्रथम ऊर्मिरुत्तरो
निस्तरङ्गशिवचित्पयोनिधेः ।
प्रागचित्पदपरिग्रहात्त (व) तो
व्योमनीश्वरि तनुर्महोद (या) यः ॥४३॥

उद्यमइत्यादिना । हेईश्वरि! तव अचित्पदपरिग्रहात्प्राक् । पूर्वोक्तानुत्तरेच्छोन्मेषात्मकान्तस्त्रिपुटीप्राणस्पन्दस्य आनन्देशनोर्म्यात्मकबाह्यत्रिपुटीप्राणस्पन्दस्य च मध्यस्थित्या नियामिके इति सम्बोधनार्थः । चिन्मयानुत्तरप्राणनादात्मिकायास्तव अचित्पदपरिग्रहात्प्राक् । शब्दक्रमे आनन्दत्रिपुट्यात्मकबाह्यानुत्तरजडप्राणस्पन्दाकारकाचित्परिग्रहात्पूर्वं । अर्थक्रमेच, जडक्रियाशक्तिस्पन्दपरिग्रहात्पूर्वं चेत्यर्थः । निस्तरङ्गशिवचित्पयोनिधेः 'वश् कान्ता' विति धातोर्वर्णव्यत्ययाद्विपरीतेच्छामात्रात्मकत्वेन तरङ्गरूपकार्यानुकूलक्रियापरिणतेरभावान्निस्तरङ्गः । ऊर्मिमयकार्यक्रियातरङ्गरहितः यः शिवचित्पयोनिधिः इच्छाया उन्मेषमात्रशरीरकसाधकशिवज्ञानसमुद्रः । तथा विपरीतेच्छात्मकत्वेन निरन्तरकार्यक्रियातरङ्गमयश्चार्थक्रमे बहिर्मुखशिवचित्पयोनिधिश्च । तस्य प्रथमः स्पन्दः उद्यमः । अनुत्तरेच्छाशरीरेण अनुत्तरोन्मेषेण च । बाह्यानन्देशनात्मकविपरीतानन्दोन्मेषेण वा अन्तर्बहिश्च कारणात्मकः आभ्यान्तरकृतिमात्रेण उन्मेषं यमयतीति व्युत्पत्त्या उद्यमपर्याय उन्मेष एवेत्यर्थः। उत्तरस्पन्दस्य ऊर्मिरूपेण महोदयतनुत्वेन कार्यत्वावगमादिति भावः । उत्तरः उत्तीर्यते साधकः अन्तर्मुखत्वेन बहिर्मुखत्वेन वा अस्मादिति व्युत्पत्त्या, शब्दानन्दत्रिपुट्यात्मकत्वेन, अर्थानन्दत्रिपुट्यात्मकत्वेन वा पूर्वोक्ताचित्पदपरिग्रहोत्तरकालिकः स्पन्दः । ऊर्मिः कार्यक्रियातरङ्गरूपस्सन् । व्योमनि दहराकाशे । महोदयः महसां तेजसां उत्सवानां वा उदयः । उदीयमानतेजोरूपः, उदीयमानोत्सवरूपो वा तव तनुः भवति । "मह उद्धव उत्सव" इत्यमरः ।

शाब्दानन्दत्रिपुटी उद्यमात्मक: कारणस्पन्द: आर्थिकानन्दत्रिपुटी उद्यमात्मको वा। ऊर्मिरूपेणान्तर्बहिश्च क्रियाकृतिरूपेण विश्वोत्तीर्णश्चेदुदीयमानतेजोराशिरूपेण योगीश्वरो यतिः। उदीयमानोत्सवराशिरूपेण भोगीश्वरो भूपतिर्वा भवतीति तात्पर्यार्थः। व्योमनीश्वरीत्येकपदत्वविवक्षायां लुक्समासान्वयेन दहराकाशे वृत्तिनियामिके इति सम्बुद्ध्यर्थः। प्रागचित्पदपरिग्रहात्सत इति पाठे-- यथा शाब्दिकाकारचिन्मयपदपरिग्रहात्पूर्वं प्रथमः स्पन्दः। शब्दज्ञानजडः उद्यममात्रशरीरकः। तथा आर्थिकजडक्रियापदपरिग्रहात्पूर्वं प्रथमः स्पन्दश्चिन्मयोपि अर्थक्रियाजडः। उद्यममात्रशरीरकएव। ततः पश्चात् शाब्दिकज्ञानस्पन्दः आर्थिकक्रियास्पन्दो वा विश्वोत्तीर्णस्सन् महोदय ऊर्मिः क्रियाकार्यतरङ्गरूपो भवतीत्यर्थः। महोदया इति स्त्रीलिङ्गपाठे-- स्त्री तनोर्विशेषणमिति ज्ञेयम् ॥२१-४३॥

एवं कर्तृकार्यक्रियामयत्रिपुट्या एव ज्ञानक्रियोर्मिरूपेण महोदयतनुरूपतां निरूप्य तस्या एव स्थानभेदप्रयुक्तखेचरीभूचरीदक्चरीदिक्चरीगोचरीत्वरूपवक्ष्यमाणलक्षणधर्मपञ्चकात्मना त्रिचतुःपञ्चवाहमहार्थतामपि दर्शयति—

स्फारि (स्वादि) ता जननि! से (ने) यमेषणा
खेचर (त्वस [त्यसु]) मुपाश्रिता दिशि।
भक्षचक्रमनुजग्मुषी गवी
प्राप्तगोचरपदा भव [वः] स्वयम् ॥४४॥

स्फारि (स्वादि)तेत्यादिना। हेजननीति हेतुगर्भितसम्बुद्धिः। सेयमेषणा। पूर्वोक्तकर्तृकार्यक्रियात्रिपुटीप्रथमस्पन्दोद्यमात्मिका इच्छा। स्फारिता स्फुरत्तां प्रापिता द्वितीयस्पन्दात्मकोर्मिरूपेण प्रकटितेत्यर्थः। स्वादिता जननि नेयमेषणेति पाठे-- इय मेषणा न स्वादिता। सृष्टिसङ्कल्पस्य "इच्छामात्रं प्रभोस्सृष्टिः क्रीडार्थमिति चापरे" इत्युक्तप्रकारेण क्रीडात्मकतया निरहंकृतिरूपत्वाद्विषयलौल्येनाननुभूता सतीत्यर्थः। तदुक्तं श्रुत्या-- "अनश्नन्नन्यो अभिचाकशीति" इति। अथवा, स्वादिता ना नृशक्तिर्मनुष्यो भवति इति वा अर्थः। खे दहराकाशे भूताकाशे च। असमुपा-

श्रिता । असुम् अं इति शाक्तानुत्तरविसर्गप्राणस्पन्दमात्रं तदीयं अं इति शाम्भवानुत्तरविसर्गनादस्पन्दमात्रं च उपाश्रिता असमुपाश्रितासती । खे दहराकाशे भूताकाशे वा चरतु । तेन खेचरीनामशक्तिश्च भवत्विति 'प्रार्थनायां लोट्' खेचरत्यसुमुपाश्रितेति पाठे– असुं प्राणं उपाश्रिता सती खेचरति । दहराकाशमात्रचारिणी । अन्तः खेचरीनामिका, भूताकाशमा-त्रचारिणी । बहिः खेचरीनामिका च । मुद्राशक्तिर्भवतीत्यर्थः । तदुक्तं त-न्त्रान्तरे अन्योन्यलक्षणभेदेन खेचरीमुद्रालक्षणम् "अन्तर्लक्ष्यो बहिर्दृष्टिर्नि-मेषोन्मेषवर्जितः । इयं सा खेचरी मुद्रा सर्वतन्त्रेषु गोपिता" इति । एवमु-त्तरत्रापि मुद्राशक्तिलक्षणादिकं बोध्यम् । दिशि । चरत्वसमुपाश्रितेति पू-र्वपाठानुषङ्गेण, चरत्यसुमुपाश्रितेति द्वितीयपाठानुषङ्गेण वा, दिक्चरीना-मिका शक्ति मुद्रा वा भवतीति पूर्ववदेवान्ययः । अक्षचक्रं आदिक्षान्त-प्रत्याहारेण मातृकार्णचक्रं, इन्द्रियचक्रं च । अनु अनुसृत्य जग्मुषी । ग-षी गोचरीनाम शक्तिः । गोशब्दस्य चक्षुर्वागादीन्द्रियतद्वृत्तिवाचकत्वात् दक्चरीनाम्नी च शक्तिः वागादीन्द्रियरूपिणी मुद्रा च भवतीत्यर्थः । ततः प्राप्तगोचरपदा । गोचरपदं विषयेन्द्रियसंसर्गस्थानम् । गोशब्दस्य "स्वर्गे-षुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्योः स्त्रियां पुंसि गौः" इत्य-मरकोशात् । "गौः । ग्मा । क्ष्मा" इति सांख्यसूत्रेषु भूपर्यायतया पाठाच्च । भूवाचकत्वस्याप्यवगमात् भूमिसञ्चारस्थानं च प्राप्ता प्राप्तगोचरपदा । स्वयं-भव । भूचरीनाम्नी शक्तिर्मुद्रा च भवेति प्रार्थनायामामन्त्रणे वा लिङ् । भ-वः स्वयमिति पाठे– 'भूसत्तायामिति धातोः' भवतीति भव इति सत्तामात्रश-रीरकशङ्करो वा स्वयं भवतीति स्वयंभु ब्रह्म प्रकृतिरूपो वा । भवशब्द-स्य संसारशिवयोर्वाचकत्वाद्यथाधिकारं जीवशिवसंसारान्यतररूपो वा शिवा-त्मकएव भवतीत्यर्थः । एव मत्र भवशब्दश्लेषमहिम्ना मङ्गलजन्मजीवशि-वसंसारवागर्थस्वयंभुब्रह्मपञ्चकपञ्चब्रह्मणां खेचर्यादिपञ्चशक्तीनां च यथेच्छं मुद्राशक्तिचतुष्टयपञ्चकान्यतरसामरस्येनाभेदविवक्षया भेदे वा नादनवकश्री-चक्रेपि शैवशाक्तचतुःपञ्चपीठकोणान्यतरात्मना च आश्लिष्टजीवितपुरुषार्थ-

चतुष्टयरहस्यं स्वस्वरूपसुखे मोक्षाख्यं पञ्चमपुरुषार्थरहस्यं च सूक्ष्मेक्षिक्रया किंचिदिवोन्मीलितमित्यपि सुधीभिरवसेयम् ॥४२-४४॥

पूर्वश्लोकोक्तखेचर्यादिपञ्चविधनादबिन्दुलिपिमुद्राशक्तिषु पूर्वोक्तप्रकारेणान्यतमान्तर्भावे चतुर्णामेव बहिस्सजीकचातुर्वर्ण्यचातुराश्रम्यचतुर्वर्गादिवागर्थरूपेण सावयवप्रकृतिरूपतामन्तः परापश्यन्त्यादिनिरवयवपरानादप्रकृतिरूपतां च पञ्चमीं विवृणोति—

खेचरीप्रभृति यच्चतुष्टयं
सार (हंस) सांश) मम्ब! तव तद्बहिर्वपुः ।
यद्द्वयाद्वयविभागघस्मरम्
तन्निरंशमबहिर्न (न्नु) वाक्पदम् ॥ ४५ ॥

खेचरीप्रभृतीत्यादिना । हेअम्ब! खेचरीप्रभृति यत् चतुष्टयं । पूर्वोक्तप्रकारेण गोभूचर्योः दिग्दिक्चर्यो वा ऐक्यविवक्षया यच्चतुष्टयं । सारं घनीभूतपयोनवनीतकरकादिवत् स्थिरांशरूपम् । तव वागर्थरूपिण्यास्तस बहिर्वपुः देहेन्द्रियसङ्घातत्वेन व्यवहार्यं त्वदीयबाह्यनादशरीरमित्यर्थः । हंसमम्बेति सांशमम्बेति वा पाठान्तरद्वयपक्षे— प्राणसञ्चाररूपं शाम्भवविसर्गविलासात्मना, शाक्तविसर्गविलासात्मना वा नामरूपाभ्यां सावयवरूपं चेत्यर्थः । यत् वपुः द्वयाद्वयविभागघस्मरं नामरूपात्मकद्वयविभागस्य प्राणस्पन्दात्मकाद्वयविभागस्य च घस्मरं भक्षकम् । तदुभयप्रकाशकं वा । यत् विमर्शमयपरानादात्मकं वपुरस्ति तन्निरंशम् । नामरूपयोर्भेदाभावात् प्रकाशे वा तदैक्यादित्याशयः । अतएव अबहिः बहिर्नवर्तते । अतएव न वाक्पदं वाचा पद्यते वक्तुं प्राप्तुं वा इति वाक्पदम् । तादृशं न भवतीति नवाक्पदम् । नादैकशरीरत्वाद्वाचामगोचरमित्यर्थः । यद्वा, तन्निरंशं नादशरीरं अबहि र्न, आभ्यन्तरं न भवति किमिति प्रश्नार्थे काकुः । आभ्यन्तरमेवेत्यर्थः । कुत इतिचेद्यतो वाक्पदं परापश्यन्त्यादिवाक्चतुष्टयवृत्तिरूपेण "विन्द्वर्धचन्द्ररोधिन्यो नादनादान्तशक्तयः । व्यापिका समनोन्मन्यो नवनादाः प्रकीर्तिताः" इत्युक्तनादनवकशरीरेण वा पद्यमानं वा-

गात्मनैव पच्यमानरूपम् । अतः अबहिः आभ्यन्तरमेवार्थशरीरेण शब्द-शरीरेणापि अबहिः अकाराद्बहिर्भूतं इति वाऽर्थः यथेच्छं वा हेतुहेतुमद्भावः । यतो अबहिः अतएव निरंशमिति । यतो निरंशं अतएव द्वयाद्वयविभागघस्मरं । अतएव वाक्पदं च । वागात्मना नित्यासत्वादिति भावः । अबहिर्नु वाक्पदमिति पाठे– नु इति वितर्के । अबहिर्नु मनोगम्यत्वेन आभ्यन्तरं किमित्यर्थः । कुत इति चेत् , यतो वाक्पदं मनोगम्यस्यैव वाचापि पच्यमानत्वादिति भावः । तदप्युक्तं श्रुत्या– "यद्धि मनसा ध्यायति । तद्वाचा वदति । तत्कर्मणा करोति" इति । यद्वा, नु निश्चये । वाक्पदंतु वाग्गोचरमेव खलु । कुत इति चेत् यतो अबहिः । आप्यसर्पकुण्डलीतत्पर-त्वेनानूह्यम् । अतो वाक्पदमेवेति भावः । यद्वा, नु इति संशये वा । "मनसैवानुद्रष्टव्यम्" इति श्रुतेः विमर्शैकलभ्यम् । इति वाऽर्थः ॥२३-४५॥

अथ सर्वान्तरविमर्शमयनादशरीरेण सह पञ्चवृत्तिरूपिण्याः परावाग्देवताया वहिरन्तर्गमागमाभ्यां कुलाकुलभावं निर्दर्शयन् शिवशक्त्योरकुलकुलभावं, शिवस्य शक्तिविश्रान्तिस्थानत्वं च दर्शयति—

पञ्चवृत्तितनुरम्ब! निर्गता
शक्तिरर्पितकुलप्र (भा) थासमा ।
त्वं शिवादकुलतस्समेयुषी
सेन तत्र पुनरे (ष) षि विश्र (मः) मं ॥४६॥

पंचवृत्तीत्यादिना । हेअम्ब! अर्पितकुलप्रथासना त्वया, शिवेन च अर्पितं अन्योन्यस्मिन् समर्पितम् । यत्कुलं नादवागर्थत्रिपुटीपञ्चवाहादि-सजातीयसमूहः । चातुर्वर्ण्यादि च । "सजातीयं कुलं स्मृतम्" इत्युक्तेरिति भावः । तस्य प्रथा पृथुभावः । विस्तार इति यावत् । प्रभासनेति पाठे– कुलस्य त्रिपुट्यादिसजातीयसमूहस्य चातुर्वर्ण्यादिकुलधर्मस्य वा प्रकाश इत्यर्थः । तादृशी प्रथा प्रभाया आसनं यस्यास्सा । अतएव पञ्चवृत्तितनुः । शिवेन त्वय्यर्पितकुलप्रथा (भा) वस्थायां पञ्चेंद्रियादिवृत्तिं तनोषि विस्तारयसीति शिवे त्वदर्पितकुलप्रथा (भा) वस्थायां च तत्रैव प-

ज्ञानेन्द्रियपञ्चभूतप्राणादिवृत्तिं क्षपयसि चेति पञ्चवृत्तितनुः। त्वं अकुलतः मूलाधारस्थानुत्तराकारनादकुलसहस्राराद्, आकारवर्णकुलधर्मरहिताद्वा, शिवात् जीवशिवात्। तथा नादप्राधान्येन सत्यपि कुलधर्मे वर्णप्राधान्येन सकुलधर्मसम्बन्धरहितात् ब्रह्मरन्ध्रस्थाकारनादसहस्राराच्च। शिवात् परशिवाच्च। कुलहीनाच्चेति गम्यते। 'वश् कान्तौ' इति धातोः वर्णव्यत्ययेन सिंहादिगणपठितेन इच्छापरपर्यायकान्तिमज्जीवशिवाच्च निर्गता शक्तिस्सती तेन जीवशिवेन परशिवेन वा कुलाकुलधर्मभेदेन पुनस्समेयुषी तत्र कुलसहस्रारे जीवे। अकुलसहस्रारे परशिवे वा। विश्रमं पथि प्राप्नोषि। पुनरेष विश्रम इति पाठे-- एष जीवपरशिवनिर्गमागमात्मकएव तव विश्रान्तिलक्षणाणवविसर्गरूपिण्याः विश्रम इत्यर्थः। अतएव कुलाकुलयोर्जीवशिवात्मना शक्तिशिवरूपत्वम्। तदुक्तं तन्त्रान्तरे-- "मूलाधारान्तरं चक्रषट्कं कुलमिति स्थितिः। ग्रन्थित्रयं तत्र देवि चक्रद्वितयगर्भितम् ॥१॥ पृथ्व्यापचक्रद्वितयं ब्रह्मग्रन्थिपदोदितम्। वह्निसूर्यमयं चक्रद्वयं तेजोमयं महत् ॥२॥ विष्णुग्रन्थिपदेनोक्तं तैजसं सर्वसिद्धिदम्। वाय्वाकाशद्वयीरूपं चक्रद्वितयमुत्तमम् ॥३॥ रुद्रग्रन्थिपदेनोक्तं मङ्गलायतनं महत्" इत्यादि। कौलोपनिषदि च-- "अकुलं शिव इत्याहुः कुलं शक्तिरुदीरिता। कुलाकुलानुसन्धानं कौलमित्यभिधीयते" इति। "कौलिनी कुलयोगिनी" इति ललितासहस्रनामोक्तिश्च। एतेन महाकाल्यास्साधकजीवाभेदेन शिवकालार्थशरीरत्वं कालशिवस्य क्रियावागर्थशरीरस्य कालीविश्रान्तिस्थानत्वं च कण्ठोक्तं सिद्धम् ॥२५-४६॥

एवमुक्तमर्यादया पूर्वोक्तखेचर्यादिशक्तिपञ्चकमेव यौक्तिकपाञ्चभौतिकवृत्तिपञ्चकात्मना परस्परधार्मिधर्मविवक्षाभेदेन शिवशक्तिनामपञ्चकव्यवहार्यं भवतीत्याह—

युक्तितोऽम्ब तव वृत्तिपञ्चकं
पंचभूतगुणवृत्ति लक्ष्यते ।
धार्मिवृत्तिकृतसिद्धनामकं
धर्मवृत्तिकृतशक्तिनाम ते [यत्] ॥४७॥

युक्तित इत्यादिना । हे अम्ब! तव वृत्तिपंचकं । पूर्वोक्तखेचर्यादिरूपम् । युक्तितः मेलापाख्ययोगात् ज्ञानसङ्गतेश्च । "योगस्सन्नहनोपायध्यानसङ्गतियुक्तिषु" इत्यमरः । पञ्चभूतगुणवृत्ति । पञ्चभूतानि गुणाः शब्दादयश्च वर्तन्ते यस्मिन् वृत्तिपंचके तत् । तथा पञ्चसु भूतेषु गुणेषु च वर्तते च वृत्तिपञ्चकमिति च विग्रहभेदेन पञ्चभूतगुणवृत्ति । लक्ष्यते । अतएव धर्मिवृत्तिकृतसिद्धनामकं धर्मिवृत्तिभिः वामदेवादिभिः पार्थिवो गन्ध इत्यादिभिश्च कृतैः सृष्ट्यादिकृत्यैश्च सिद्धाः ब्रह्मविष्णुरुद्रेश्वरसदाशिवा इति नामानि यस्य वृत्तिपञ्चकस्य तत् धर्मिवृत्तिकृतसिद्धनामकं । तथा धर्मवृत्तिभिः व्योमेश्वरीखेचर्यादिभिः गन्धवती पृथिवीत्यादिभिश्च कृतशक्तिनाम कृतादिकालक्रियाशक्तिनामापि । ते त्वदीयमेव । कृतशक्तिनाम यदिति पाठे- यद् धर्मवृत्तिकृतशक्तिनाम तदेव वृत्तिपञ्चकं धर्मिवृत्तिविवक्षया कृतसिद्धनामकमभ्यर्हितत्वेन शिक्षितसिद्धनामकमपि भवतीत्यर्थः । यथा धर्मभेदविवक्षया ब्राह्मीवैष्णवीरौद्रीगौर्यम्बिका चेत्यादिशक्तिभेदः । भौतिकधर्म्यैक्यविवक्षया कालशिवैक्यं च । तथैव धर्मिभेदविवक्षया ब्रह्मविष्णुरुद्रेश्वरसदाशिवा इति सिद्धभेदः । धर्म्यैक्यविवक्षया भूतप्रकृतिः कालीत्यादिशक्त्यैक्यं च समानमेवेत्यन्यतमयुगले स्वरूपैक्येन नवविधैव प्रकृतिः पुरुषो वेति भावः । एतेन ज्ञानक्रिययोर्धर्मधर्मिभावोऽपि ऐच्छिक इति सिद्धम् ॥२७-४७॥

एवमुक्तसशक्तिकभूतपंचकं ब्रह्मविष्ण्वादिनाममात्रभिन्नपंचब्रह्ममुखात्मकं त्वदीयोन्मनीनादाकृतित्वेन वेदिता कृतार्थ एवेत्याह—

ब्रह्मणः प्रभृतिसिद्धपंचकं
भारतीप्रभृतिशक्तिपंचकम् ।
उन्मनीं स्मरति यस्तवाकृतिं
सिद्ध[वर्त्मनि [पर्वणि] जयत्यसौ जनः ॥४८॥

ब्रह्मणः प्रभृतीति । ब्रह्मणः प्रभृति ब्रह्मविष्णुरुद्रेश्वरसदाशिवात्मकमित्यर्थः । सिद्धानां पंचकं । भारतीप्रभृति भारतीलक्ष्मीगौरीशमाम्बिकात्मकं

शक्तिपञ्चकं च। यो जनः जनिमानपि साधकः। तत्र उन्मनीमाकृतिं स्मरति। उन्मनीनादात्मना घनीभूताकृतिं स्मृतिविषयां करोति। असौ स्मृत्यारूढत्वदीयोन्मन्याकृतित्वेन नादोन्मनीवृत्तिकरसाधकः। सिद्धवर्त्मनि सिद्धमार्गे जयति सर्वोत्कर्षेण वर्तते। सिद्धपर्वणीति पाठे पूरयति गणनामिति पर्व। संख्यानं। किंच नित्या रश्मिवृन्देपि द्वादशान्तबिन्दौ उन्मनीनादवृत्तिकः तुरीयविमर्शवक्ष्यमाणपार्थिवाद्याकाशान्तमातृकाविद्यापीठात्मकः। जयाकालीशक्त्यात्मना स्वयमेवाचरतीत्याचारार्थे क्विप्। सिद्धसङ्ख्यापूरको भवतीत्यर्थः। स्मरतीत्यनेन स्मर्तुरेवेदृशं फलं। किमुत वेदितुरिति भावः ॥२६-४८॥

अथ साधकस्यापि वस्तुभेदबुद्धिं निराकर्तुं वासनासृष्टिहेतुतामाह—

त्वं प्रकाशयासि यं स सृज्यते
धर्मिधर्मतनुरर्थ ईश्वरे।
यः प्रकाश इह स त्वया कृत
स्तत्तदाकृतिरुपैति सृष्टिताम् ॥४९॥

त्वमित्यादिना। इह उन्मनीनादात्मकाशिवशक्तिसामरस्याकृतौ। त्वं तादृशविमर्शबिन्दुनादात्मिका त्वमित्यर्थः। यं साधकं प्रतिप्रकाशयसि। प्रकाश इवाचरसि प्रकाश्यरूपेणेति भावः। धर्मिधर्मतनुः धर्मिणं नादात्मानं धर्मतया देहेन्द्रियसङ्घातात्मकबैन्दववागर्थशरीरतया वैपरीत्येन वा धर्मं वागार्थशरीरं नादात्मना वा तनोति विस्तारयत्यन्यतरं क्षीणयतीत्रेति धर्मिधर्मतनुः। काकाक्षिन्यायेन धर्मिधर्मोभयात्मकशरीरो वा इति चाप्यर्थः। अतएव ईश्वरे अर्थः। नरनार्यन्यतरजीवरूपेण अर्थांशरूपः। धर्मिधर्मोभयशरीरको वा सृज्यते। अतएवार्थयति कान्ता कनकाद्याविधकपुरुषार्थं विद्यामयं कृत्यपंचकपाण्डित्यं स्वस्वरूपानुभवपुरुषार्थं वेत्यर्थश्च। ईश्वरे इति प्रयोजकत्वविवक्षया अधिकरणविवक्षया वा यथाक्रमं सप्तमी योज्या। ईश्वरप्रयुक्त ईश्वराधिकरणको वा अविद्यकं विद्यामयं वा कामं कामयमानो भवतीत्यर्थः। तदुक्तं गीतासु भगवतापि— 'यो यो यां यां तनुं भक्तः श्रद्ध-

थार्चितु मिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ स त-
या श्रद्धया युक्तस्तस्याराधनमीहते । अन्तवत्तु फलं तेषां तद्भवत्यल्पमेध-
साम्” इत्यादिना तदुभयपुरुषार्थफलस्याप्यल्पमेधस्त्वेनांतवत्त्वमपि दर्शितम् ।
स्वस्वरूपतत्त्वावबोधोत्तरं विद्यामयपुरुषार्थस्यापि पुरुषार्थत्वदशैवान्तवत्त्वं न
स्वरूपदशा । स्वरूपदशा तु विद्याविद्ययोर्द्वयोरप्यात्मविभूतिरूपेणैवानन्त्या-
दीत्यपि बोद्धव्यम् । किञ्चात्र ईश्वर अर्थ इति शाब्दार्थान्यतरब्रह्ममात्र-
निष्ठया नादात्मकतदुभयसामरस्याभावेनासम्पूर्णात्मरूप एवेश्वरोपीति ध्वनि-
तोर्थः । अतएव “यो मन अन्तरो यमयति यं मनो न वेद यस्य मनश्शरीरं ।
य आत्मानमन्तरो यमयति” इत्यादि । “एषत आत्मान्तर्याम्यमृतः” इत्या-
द्यन्तर्यामिब्राह्मणमपि असम्पूर्णचिदाभासस्यैवेशस्य कूटस्थतादात्म्येनान्तर्या-
मित्वं द्योतयति न कूटस्थात्मनोन्तर्यामित्वं अनवस्थापत्तेरिति । अतएव “ई-
श्वरो बहिरुन्मेषो निमेषोन्तस्सदाशिवः” इति । तन्त्रान्तरमपीश्वरस्यैव बहि-
रुन्मेषतत्परस्यान्तर्यामितां द्रढयति– सः त्रिविधोपि साधकस्सृज्यते । त-
त्तद्वासनामय्या त्वयैवेति शेषः । सतु साधको भूत्वा सृष्ट्यत्रयवरूपेण
सृष्टावन्तर्भवतीति भावः । यश्च सिद्धः इह पूर्वोक्तत्वदीयोन्मन्या कृतावे-
बेत्यर्थः । प्रकाशः प्रकाशाभिन्नस्वरूपएव । त्वया उन्मनीनादात्मिकया कृ-
त इति कालशिवस्याप्यस्वातन्त्र्यवचनं नहिनिन्दान्यायेन नादशक्तिप्राधा-
न्यद्योतनपरम् । तदुक्तं सौन्दर्यलहर्याम् – “शिवश्शक्त्या युक्तो यदि भव-
ति शक्तः प्रभवितुम्” इत्यादिना । सः तादृशस्वरूपसिद्धः उत्तमाधिकारी।
तत्तदाकृतिः । स्वेच्छयैव तत्तद्देशकालपदार्थादिरूपस्सन् । सृष्टितां सृष्टि-
धर्मतां सृष्टिसारूप्यमिति यावत् । उपैति भजते । सृष्टिस्वातन्त्र्यं प्राप्नो-
तीत्यर्थः । “ध्यायतीव । लेलायतीव” इत्यादिश्रुतेः परदृष्ट्या सृष्टिसा-
रूप्यमिव भजते इति भावः । अतएवोक्तं द्वादशमञ्जरिकास्तवेप्यनेनैव क-
विना “मनुष्यास्तिर्यञ्चो मरुत इति लोकत्रयमिदं भवाम्भोधौ मग्नं त्रिगुण-
मयमायाविलसितम् । कटाक्षश्चेद्यत्र क्वचन तव मातः करुणया शरीरी
सद्योयं भजति परमानन्दतनुताम्” इति ॥२८-४९॥

अथोक्तोन्मनीनादात्मना चिन्मयशरीरिण्याः परदेवतायाश्चित्तापरप-र्यायवासनामयनादशरीरस्यापि प्रमेयार्थमण्डलशेषतानिबन्धनचिद्विलासरूप-त्वेनानित्यतां द्योतयन्वक्ष्यमाणगुरुपुष्पसङ्केतचक्रमेपि वागर्थषडध्वमूलशिष्यौ-घगुरुपंक्तेर्मूलरूपतामाह—

त्वं हि चित्तनुरतो न चित्तता
ख [खे] न ते विषयचि (त्र) ततां विना।
शिष्यसे यदि विनार्थमण्डलं
सर्गसीमनि कुतो (स्तु) स्ति चित्तता ॥५०॥

त्वंहीत्यादिना। त्वं उन्मनीनादाकृतिस्त्वमित्यर्थः। हि यस्मात्। चित्तनुः चितं तनोषि विस्तारयसि क्षीणयसीति व्युत्पत्तिभेदेन। ज्ञान-क्रियोभयघनशक्तिस्वरूपिणी। अतएव चिच्छरीरा च। अतः कारणात् ते तव। विषयचितता विना विषयाकारेपि चिद्वृत्तितां विना। चि-त्रतां विनेति पाठे– प्रपञ्चविषयकवैचित्र्ये चिच्चमत्कारवृत्तितां विनेत्यर्थः। अतएवोक्तं तन्त्रान्तरे "चिदेव प्रथमं चित्तं विषयासङ्गतस्ततः। प्रपञ्चा-कारतां प्राप्तं चित्रमित्यभिधीयते" इति। चित्रापूर्णमास्यात्मता च वत्सर-कालमुखत्वादिति भावः। खे दहराकाशे भूताकाशे वा। चित्तता न। चित्तव्यवहारो नास्ति। खेनेति पाठे– स्वेन स्वचित्स्वरूपेणेत्यर्थः।

एवं स्फटिकलौहित्यादिवत् विषयोपरक्तौ कल्पितवैषयिकचित्तरूपतां परदेवतायाः निषिध्य तच्छेषितयापि तन्निषेधसिद्धिं कैमुतिकन्यायतो द-र्शयन् वृत्तिज्ञानक्रियामयजडप्रकृतेः महार्थक्रमसूचितपरौघमहौघदिव्यसि-द्धमानवशिष्यौघाढ्यषड्विधगुरुपंक्तिक्रमे शिष्यौघाढ्यगुरुपंक्तेरपि क्रममूल-रूपतां सति वागर्थस्वातन्त्र्ये दर्शयति— शिष्यस इति। अर्थमण्डलंवि-ना प्रमेयवागर्थविषयवर्गमन्तरा सर्गसीमनि निष्कामकर्मानुष्ठानात्मकशाक्त-विसर्गस्य पार्यन्तिकवागर्थसृष्टिमार्गे। शिष्यसे यदि। ज्ञातृत्वकर्तृत्वाद्यपरप-र्यायज्ञानक्रियादिफलगामिशेषितारूपेण तिष्ठसि चेदित्यर्थः। चित्तता चि-त्तव्यवहारः कुतोस्तुः इति सम्भावनायां प्रश्ने वा लोट्। तर्क्यमाणे

स्वीयज्ञानक्रियाफलमात्रभोक्तुः सत्यपि कर्तृत्वादितादात्म्याध्याससम्बन्धे चिन्मयत्वव्यवहारयोग्यतया शिष्यौघगुरुपंक्तिप्रवेशयोग्यत्वा चिन्मयमानवजीवशक्तिरूपएव सः। न स्तम्भकुम्भादिवत् नापि पशुपक्ष्यादितिर्यग्योनिवद्वा चैत्यत्वव्यवहारेण सम्बोधनानर्हस्तदीयश्चित्तत्वव्यवहार इति भावः। कुतोऽस्तीति पाठे?– कुतश्चिदपि चित्तता नास्तीति स्पष्टोर्थः। चिच्छक्त्याः जडशक्तिं प्रति शेषत्वावस्थायामेव विषयवाननोपरक्त्यभावे, शेषिनावस्थायां कुतस्त्या विषयोपरक्तिरिति भावः। प्रमेयं विना प्रमातृप्रमाणांशयोरपि प्रमातृत्वाद्यसम्भवात् स्तम्भकुम्भादिजडप्रमेयगतचैतन्यव्यवहार इव चिन्मयप्रमेयेपि देहेन्द्रियादौ व्यवहारसिद्धिफलकश्चित्तत्वव्यवहारो अध्यारोपसिद्धएव न वास्तव इत्यक्षरार्थः ॥२८-५०॥

ननु यद्यचित्प्रमेयार्थमण्डलगतएव चित्तव्यवहारः परदेवताया निषिद्धः, हन्त तर्हि मेयान्तःकरणसमष्टिरूपस्य तस्यैव वासनात्मना महाप्रमातृप्रमेयान्यतरत्रिपुटीशरीरघटकत्वात् त्रिपुटीचिच्छक्तिरूपिण्याः सृष्टिकाल्यास्स्वरूपभञ्जक एवेत्याशङ्क्य तस्याश्शक्तिलक्षणजगद्धृतोदरीत्वेन सृष्टिकालिकोन्मनीनादशरीरायाः ध्यानश्लोकोक्तनिर्णतोदरीत्वं प्रत्यभिज्ञापयन् तदीयचिन्मयवासनायाः सृष्टिवैचित्र्यापरपर्यायजडजागतविषयशबलतां निराकरोति—

**वासनाघनविचित्रताप [रं] दं**
**तत्प्रसूस्त्वसिह केवलैव चेत्।**
**शक्तिलक्षणजगद्भृतोदरी**
**मानसैन्द्रियकवस्तु सू [नो] रसि ॥५१॥**

वासनेत्यादिना। इह मातृमानमेयात्मकनादनवकत्रिपुटीसर्गसीमनि। शक्तिलक्षणजगद्भृतोदरी। शक्तयः पूर्वोक्तखेचर्यादयो लक्षणं यस्य जगतः। गच्छतीति जगदिति व्युत्पत्त्या गतिमन्नादनवकसमष्टेस्तन्मयस्यैव वा जगतः। यद्वा, शक्तीः शक्तिव्यापिकासमानापरपर्याय इच्छाज्ञानक्रियाशक्तीर्लक्षयतीति वा शक्तिलक्षणमुन्मनीनादाख्यं वा वागर्थसाधारणं जगत्। तद्बिभर्तीति वा। तेन भ्रियत इति वा शक्तिलक्षणजगद्भृतम्। तादृशं उदरं य-

स्यास्सा शक्तिलक्षणजगद्भृतोदरी । मानसैन्द्रियकवस्तुसूः । मन इन्द्रियशरीरकमात्रवस्तूनि, स्वाप्निकानीव प्रातिभासिकवस्तूनि । तद्विषयकवस्तूनि व्यावहारिकाणि वा, भौतिकानि च सूते इति मानसैन्द्रियकवस्तुसूः । मानसैन्द्रियकवस्तुनोरसीति पाठे-- मनोमात्रशरीरकस्य तद्विषयकस्य च । तथा इन्द्रियवृत्तिमात्रशरीरकस्य तद्विषयस्य च । तयोः साक्षिभास्येन्द्रियवेद्यवस्तुनोरिति द्विवचनप्रयोगगूढाभिसन्धिः । यद्वा, मन इन्द्रियमात्रशरीरकाक्षरात्मवस्तुना । उरसि दहराकाशे । शक्तिलक्षणजगद्भृतोदरी । इति धान्येन धनवानितिवत् शक्तिलक्षणजगद्भृतोदर्या वागर्थाक्षमालायाः आत्मवस्त्वभेदविवक्षया इत्थं भावलक्षणतृतीयाविवक्षया वा अन्वयः । ईदृशी उक्तलक्षणा त्वम् । केवलैव । चिद्रूपिणी पूर्वोक्तोन्मनीनादमात्राकृति र्वा सजातीयादिभेदत्रयरहितैव । तत्प्रसूः पूर्वोक्तनादनवकत्रिपुटीप्रसवित्री तदीयवासनामात्रप्रसवित्री वा असि चेत् , वासना च विषयवासनापीति चकारार्थः । विचित्रतापदं न भवति । न विचित्रतापरमिति पाठे- वासनैव परं न विचित्रता । विचित्रतैव परं तात्कालिकी । न तदीया वासना । इति परशब्दः वासनाविचित्रतयोः अन्यतरतादात्म्यभावेन नादनवकत्रिपुट्यभेदस्वाभाव्येन वा चिन्मयसृष्टिकालीकैवल्यभावबोधकः । उभयोरपि चिन्मयत्वान्न विषयोपरक्तिः । चिज्जन्यवासनायाएव विषयोपरक्त्यभावे तज्जनकचितो विषयोपरक्तिर्दूरापास्तैवेति तात्पर्यार्थः ।

ननु तर्हि चिन्मयवासनाया अपि विषयोपरक्त्यभावे जगत्सृष्टेरेवाभावाज्जगन्मातृत्वं भज्येतेतीयमाशङ्का स्वप्नावस्थायामिव 'मानसैन्द्रियक,वृत्तिलक्षणानेककोटिब्रह्माण्डसृष्ट्यादिभिरप्यसम्पूर्णोदरीत्वबोधकशक्तिलक्षणजगद्भृतोदरीत्वविशेषणेनैव निरस्तेति सर्वं रमणीयमिति संक्षेपः ॥२९-५१॥

उक्तनादनवकात्मकवागर्थजगत्प्रकाशनेन तदेव जगन्मातृत्वं द्रढयति—

सार्वकालिकमिदं जगत्त्वया
भास्यते विधृतशब्दरूपया ।
आन्तरं जननि! बुद्धिदर्पणे
बाह्यमप्यतनमक्षरू (ढ) पया ॥५२॥

सार्वकालिकमित्यादिना । हेजननीति साभिप्रायसम्बुद्धिः । सार्व-कालिकं भूतभविष्यद्वर्तमानकालत्रयापन्नम् , जाग्रदाद्यवस्थापन्नं च । आन्तरं अन्तरात्मनि भवतीति अन्तरा लोकत्रयान्तराले वर्तते चत्यान्तरं । इदं इदमंशात्मना साक्षिभास्यम् । इन्द्रियवेद्यं च जगत् गच्छतीति जगदिति वर्णागमव्युत्पत्त्या आतिवाहिकजीवरूपम् । बुद्धिदर्पणे अधिष्ठानकूटस्थकल्पिते दर्पणस्थानीयबुद्धितत्त्वे । विधृतशब्दरूपया विलक्षणं यथा भवति तथा प्राणापानादिवृत्तिभेदेन तदीयगतीन्द्रियवृत्त्यादिभेदेन च धृतः शब्दः दशविधप्राणनादतद्बोधकदशवह्निकलास्वरादिरूपः । स विधृतः शब्दएव रूपं यस्यास्तया जीवात्मकपरावाक्छब्दरूपया । तथा विधृतं विना कीरकलविंकादिनेव धृतं शब्दस्य वैखरीशब्दस्य रूपं यया देहेन्द्रियजडप्रकृतिरूपया । तया च विधृतशब्दरूपया त्वया । जडाजडसामरस्यप्रकृतिरूपया त्वयेत्यर्थः । भास्यते वक्ष्यमाणलक्षणभासाकाल्यात्मना भूयते । प्रकाश्यते च । तथा बाह्यं बहिर्भवं, वबयोरभेदाद्वाह्यं वहनीयं च । अक्षरूढयेति पाठभेदलिङ्गात्, वबयोरभेदविवक्षा च । अद्यतनं 'अदभक्षणे' इति धातोर्भोगकालमात्रावसायि भोगायतनरूपम् । अद्य जाग्रत्सृष्ट्याद्यवस्थामात्रानुभूयमानं च । अक्षरूपया ज्ञानकर्मेन्द्रियसङ्घातरूपया । तत्तदिन्द्रियकार्यवैखरीशब्दश्रवणवचनादिवैखरीवर्णाक्षमालारूपया च । अक्षरूढयेति पाठे-- इन्द्रियविषयवृत्त्या रूढयेत्यर्थः । त्वया भास्यत इति पूर्वेणान्वयः॥

एवमुक्तप्रकारकनादनवकत्रिपुट्युपास्तेः परमावधिं दर्शयति—

यावदम्ब! पुरुषस्य शान्तता
सप्तमी सकलभाववर्तिनः ।
तावदद्वयविमर्शभिन्नता
सार्व (कालि (भाव) कविमर्शभाविता ॥५३॥

यावदित्यादिना। हेअम्ब! सकलभाववर्तिनः। जै अ ३ पा १ सू १॥ भावार्थाः कर्मशब्दाः तेभ्यः क्रियाप्रतीयेतैषह्यर्थो विधते । इति जैमिनीयसूत्रोक्तप्रातिभासिकव्यवहारसत्तार्थकभावशब्दस्य अन्तर्बहिःक्रियाबोधकत्वा-

तस्याश्च क्रियायाः कृत्तिङ्प्रत्ययबोध्यैकरूपिकबाह्यान्तस्त्रिपुटीद्वयसमसत्ताकत्व-नियमेन च कृत्प्रत्ययार्थबाह्यत्रिपुट्यां तिङर्थाभ्यन्तरत्रिपुट्यां च अनुनासिकाननुनासिककृदन्ततकृदन्तवागर्थसामरस्यात्मना, तथाविधतिबन्ततिङन्तधातुमयवागर्थसामरस्यात्मना च, कार्तान्तिककार्तिकेयशब्दार्थात्मना वा, शिवकुमाररूपौ पूर्वोक्तयोगसांख्यप्रदेशिकौ पुरुषावत्र सकलभावशब्दार्थपुरुषरूपत्वेन तद्वीतिशब्दार्थत्वेन वाऽभिप्रेतौ। तत्र सकलभावेषु सांख्ययोगमार्गप्रवर्तकभवपुत्ररूपेषु, कर्तृकार्यादिषु, अन्तर्बहिःक्रियारूपेषु वा वर्तिनः अनुष्ठातुः कर्मपरस्य पूर्वोक्तयोगमार्गदेशिकस्य, बुद्धिषष्ठकर्मेन्द्रियषडाननस्य षड्तुषडाननशिवकुमारकालपुरुषेण सह सामरस्येन सकलभाववर्तिनः। तथा सकलभावेषु अन्तर्बहिःक्रियासामरस्यपरेषु भवपुत्ररूपेषु वर्तिनो विमर्शकस्य, ज्ञानपरस्य, पूर्वोक्तसांख्यदेशिकस्य, मनष्षष्ठज्ञानेन्द्रियषडाननरूपस्य वा षड्तुषडाननकालपुरुषेण सह सामरस्येन सकलभाववर्तिनश्चवा पुरुषस्य शान्तता। यावत्पर्यन्तं सप्तमी उक्तबुद्धिषष्ठकर्मेन्द्रियव्यतिरेकेण मनष्षष्ठज्ञानेन्द्रियव्यतिरेकेण षड्तुव्यतिरेकेण वा। "अन्तर्बहिःपूरुषकालरूपतः" इत्युक्तपुरुषकालस्वस्वरूपविस्मरणेन अनुष्ठातृविमर्शकादिपुरुषरूपः कालरूपो वा षडध्वभिन्नः अस्तीति भ्रान्तिरूपिणी सप्तमी शान्ततानाम भवति। यद्वा, सकलभाववर्तिनः पुरुषस्य। कलासहितषड्भावविकारेषु वर्तमानस्य उत्तमाधिकारिणोपि सिद्धस्य। यावत्पर्यन्तं "दुःखान्यपि सुखायन्ते विषमप्यमृतायते। मोक्षायते च संसारो यत्र मार्गस्सशाङ्करः" इत्युक्तशैवमार्गपांडित्याभावेन भावेषु षडध्वातिरिक्ता काचन शान्ततानमात्मकलासप्तमी वागर्थान्यतरप्रणवोपास्तिरूपा वा स्वात्मनि यावत्पर्यन्तं भेदेन भासते, तावत्पर्यन्तं सार्वकालिकविमर्शभाविता सर्वकालसर्वावस्थाविमर्शस्य सर्वभावविषयकविमर्शस्य वा भाविता। भवितव्यता नाम। अद्वयविमर्शभिन्नता भेदेनाद्वयविमर्शो वा। आत्माभेदेनाद्वयविमर्शप्रकारभेदो वा वक्ष्यमाणधामसंविद्वर्णक्रमेषु नादवर्णात्मकानुत्तराकारद्वयविमर्शस्य भिन्नता वा भवतीति शेषः। बाह्यवस्तुनिमित्तककृत्रिमशान्त्यौदासीन्येन वाः

स्तवषडध्वासिन्नषडङ्गकात्मविश्रान्तिर्यदा आश्रीयते तदा बाह्यविमर्शः परिसमाप्यत इति भावः ॥३१-५३॥

अथोक्तप्रकारेण बाह्यविमर्शपरिसमाप्तावस्मिन्नेव जगति वासनात्मनान्तर्भूतमन्यदेव चिन्मयं जगत्सकृद्विभातात्मभावेन सर्वभूतात्मभूतात्मभावेन वा यत् स्फुरति सैव त्वमित्याह—

अम्ब! तज्जडमुशन्ति भे (दधी) दिभि
यद्गुणैः स्फुरदपोह्यते क्रमात् ।
चित्तदाकृतिरनाकृ[तिः (ति) स्वतो
भाति या सकृदसौ त्व (मेव) यासि) स्म ॥५४॥

अम्बेत्यादिना । हेअम्ब! गुणैः सत्त्वादिभिः, शमादिभिः, कामक्रोधादिभिश्च । स्फुरत् यथाविकारं भेदेन प्रकाशमानं । यज्जगत् क्रमात् विमर्शाभ्यासक्रमात् । अपोह्यते यत् स्फुरत् तत्त्रैगुण्यरूपमेवेत्यपगतोहं क्रियते । यच्छमादिरूपेण स्फुरत् तत्षडध्वरूपमेवेत्यपगतविपरीतोहं क्रियते, तथा यच्च कामक्रोधादिरूपेण स्फुरत् । तत्सर्वमासुरमेवेति अपगतसंशयात्मकोहनेन आसुरजगद्विनाशनेन स्वस्वाधिकारक्रमानुसारेण बाह्यजाग्रत्स्वरूपं निषिध्यते च । तत् त्रिविधमपि जगत् यद्यपि भेदधीरेव निषिध्यते । अतएव तन्निषिध्यमानं भेदधीरूपं । जडमुशन्ति जडमेवेति निश्चयेन समामनन्ति श्रुतयः । स्मरन्ति च स्मर्तारः । वदन्ति च विमर्शकधौरेया इत्यर्थः । भेदिभिरिति पाठे- भेदवद्भिर्गुणैरिति गुणविशेषणम् ।

एवं व्यावहारिकसद्रूपं प्रातिभासिकं गुणवासनात्मकं च त्रिविधं जगन्निषिध्य पारमार्थिकविराड्रूपं स्वस्वरूपचिद्वासनामयं जगद्दर्शयति—चिदित्यादिना । तदाकृतिः तस्य निषिध्यमानत्रिविधजगतः आकृतिरिवाकृतिः यस्यास्सा तदाकृतिः स्वतः स्वरूपतः अनाकृतिः आकृतिरहिता । चिद्वासनात्मकत्वादिति भावः । अनाकृतिस्वतइत्येकपदत्वपाठे- 'अन चलने' इति धातोः प्राणस्पन्दाकृतिकात्मस्वरूपत इत्यर्थः । असौ परोक्षाकृतिरिव वर्तमाना । अतएव विमर्शावस्थायामपि । असौ इति वाक्यानुवृत्ति-

सर्गरूपान्तरपराबीजमन्त्रवागर्थसामरस्यात्मरूपेण सप्तभूमिकापिण्डमयी चेति द्योतनार्थमसौशब्दप्रयोगगूढाभिसन्धिना शाक्तविसर्गकल्पितमन्त्रमयश-रीरिणी च। या चित् सकृद्भाति। स्वात्मरूपिण्याश्रितः सकृद्विभाता-त्मरूपत्वात्सकृद्भानं वेदितव्यम्। सा चित् त्वमेवासि। त्वयासि सा इति पाठे- अभिन्ननिमित्तोपादानकारणरूपया त्वया। या चित् स्वतो भाती-ति धान्येन धनवानिति वेदित्थं भावार्थविवक्षया अभेदार्थे तृतीया वेदि-तव्या। तदुक्तं शिवदृष्टौ- विश्वस्यैव विशालं मे शरीरं चाश्नुते शिवः। शालामिव विशालां स्वामादर्शं च यथा गजः॥ अस्मिन्नेव जगत्यन्तः भ-वद्भक्तिमतामिदम्। स्वप्रकाशबहुलमन्यदेव जगद्भवत्'' इत्यादिना। तन्त्रा-न्तरैरपि पञ्चजनमानवादिसर्वजगत्प्रकारोपि चिद्भासनामयत्वेन वर्णितः ग्रन्थ-विस्तरभयादुपेक्षितः ॥३१-५४॥

नन्वेवं जाग्रदवस्थापन्नजगत्स्वरूपस्य सर्वात्मना निषेधे व्यवहारलोपा-जगदान्ध्यप्रसङ्ग इत्याशङ्क्य पुरुषापराधरूपतदीयजाड्यभेदांशमात्रस्यैव नि-षेधान्नव्यवहारलोपो नापि जगदान्ध्यं चेति परिहरति—

जाड्यमम्ब जगतो निसर्ग (जो) तो
यत्परात्प्रभृति भाति भेदतः।
त्वं तु जाड्यपरिपन्थिनी स्मृता
या विभासि सकृदर्थमण्ड (ले) पे ॥५५॥

जाड्यमम्बेत्यादिना। हे अम्ब! अर्थमण्डपे शब्देन सह द्रव्यजाति-गुणक्रियात्मकाभिधेयार्थपञ्चकरूपे विना शब्दस्वरूपं पुरुषार्थचतुष्टयगृहरू-पे वा अर्थमण्डपे। अर्थमण्डले इति पाठे- स्वस्वरूपाभिन्नपुरुषार्थपञ्चक-मण्डले तच्चतुष्टयरूपे वा इति स्पष्टोर्थः। पराप्रभृति पराप्रभृतीति परायाः प्रभृतित्वोक्तिर्मयांशाभिप्राया न पश्यन्त्यादिवत्सृष्ट्यादिकृत्यत्रयान्तर्भावाभ-वभेदपदाभिप्राया। चिद्भासनामयत्वात्परायाः। अतएव स्मृतिः "तां परां वाचमद्वयीम्" इत्याद्या। श्रुतिश्च "चत्वारि वाक्परिमिता पदानि। तानि विदुर्ब्राह्मणा ये मनीषिणः। गुहा त्रीणि निहिता नेङ्गयन्ति। तुरीयं

वाचो मनुष्या वदन्ति" इत्याद्या च । परायाः वासनात्मना स्वरूपाभेदं गमयतः । भेदतः भेदस्वभावतः । जगतो यज्जाड्यं भाति तन्निर्गतः भाति । भेदप्रयुक्तजाड्यभानं नैसर्गिकमेवेत्यर्थः , निसर्गज इति पाठे- भेदतः यज्जाड्यं भाति तत् निसर्गजो भेद इत्यर्थः । निपूर्वकसर्गशब्दस्य भेदप्रतियोगिक्रियाभिधायकत्वाद्भेदः क्रियाजन्य एवेति भावः । जाड्यपरिपन्थिनी चिदभिन्नपूर्वोक्तोन्मनीनादात्मना जाड्यविरुद्धस्वभावेत्यर्थः । या विभासि सा तादृशी त्वं तु । तुशब्दोऽत्र पूर्वपक्षव्यावृत्त्या चित्स्वाभाव्यद्योतकः । सकृत् एकप्रयत्नेन विभासीत्यनुषङ्गः । अभेदतो विभासीति भावः । यथा भेदप्रयुक्तजाड्यभानं नैसर्गिकं तथा अभेदप्रयुक्तचिद्भानमपि नैसर्गिकमेवेति फलितो वाक्यार्थः ।

ननु यदि तुशब्दः पूर्वपक्षव्यावृत्तिद्योतकस्तर्हीदं कुतोऽर्धजरतीयम् । यथा भेदप्रयुक्तजगज्जाड्यभानं नैसार्गिकं तथा चिद्भानमभेदप्रयुक्तमपि नैसर्गिकमेवेति । नैसर्गिकजगद्भेदजाड्यभानमिव चिदभेदभानमनैसार्गिकं वा कुतो न स्यात् । प्रयोज्यप्रयोजकभावविपर्ययो वा कुतो न स्यात् । यथा नैसर्गिकजाड्यप्रयुक्तो जगद्भानभेदः भेदभानं वा । तथा अनैसर्गिकचित्प्रयुक्तं जडाभेदभानमिति । तेन भेदस्य पारमार्थिकता, अभेदस्य व्यावहारिकता चेति भेदवादोऽप्यनुगृहीतः स्यादित्याशङ्क्य तथापि त्वदुक्तमर्थजरतीयं तदवस्थमेव । नायं प्रयोज्यप्रयोजकभावाकारः । किं तर्हि निसर्गसकृत्पदद्वितौ कालमानभेदभानस्य सद्भावाभावावेव जाड्यचिद्भानयोर्भेदाभेदयोर्वा प्रयोजकौ । तेनार्थमण्डपे जाड्यपरिपन्थिनी उन्मनीनादविमर्शात्मिका या त्वं विभासि सा सकृदेव विभासीति स्मृता । पराप्रभृति भेदतः जगतो यत् जाड्यं विभाति तन्निसर्गतः । नितरां कालसर्गतः असकृद्विभातीत्यर्थः । असकृद्भेदभानस्य कालसत्तामात्रसमनियतत्वेन जडस्वभावत्वात्तदूर्ध्वमपि चिन्मयसाक्ष्यभेदानुभवः स्मृत्यधीन एवेत्याशयेन स्मृतेति पदप्रयोगाभिसन्धिरिति परिहरति— स्मृतेति । अन्यथा समाधिसुषुप्त्योर्विनष्टायामपि कालसत्तायामेतावन्तं कालं योऽहं समाहितस्सुप्तो वा सोऽहमि-

Acc. No — 727

दानीं तामवस्थां कालं वा स्मरामीति प्रतिबुद्धस्मृतेरेवानुदयप्रसङ्गात् । किञ्च जगद्भेदस्येव चिदभेदस्यापि नैसर्गिकत्वानैसर्गिकत्वाङ्गीकारेऽपि वागर्थयोरिव भेदाभेदयोरप्यन्योन्यसापेक्षत्ववादिनामलङ्कारएवास्माकमधिष्ठानास्पर्शित्वात्तयोरित्यलमबालसुलभैः प्रसङ्गैः । वक्ष्यते चाग्रेपि स्मृत्यनुभवयोः क्वचिदिह तुरीयविमर्शे प्रत्यभिज्ञारूपेणं स्वात्मैक्यमपीति विरम्यते ॥३३-५५॥

खे निरस्तसकलक्रियाक्रमे
या चितिश्चरति शाश्वतोदया ।
सा शिवत्वसमवाप्तिकारिणी
खेचरी सकलखेदहारिणी ॥३४...५६॥

यद्यप्ययं श्लोकः— "अम्बिके चिदमृताम्बुधिन्मयीम्" "यत्र यत्र मिलिता मरीचयः" इत्याकारकश्लोकद्वयेन साकमेतच्छ्लोकत्रयमपि कलिकातानगरस्थागमानुसन्धानसमितीये मूलचिद्गगनचन्द्रिकाकोशे नैवोपलब्धम् । तथापि तत्रैव तत्सम्पादकैः स्वामित्रिविक्रमतीर्थपादैः मूलकोशसमाप्त्यनन्तरं योगिनीहृदयसेतुबन्धटीकायां महार्थमञ्जरीपरिमिलादिषु च तत्तदाचार्यैः प्रमाणत्वेन स्वीकृतेषूल्लेखनेन प्रदर्श्यापि स्वीये मूलकोशे तदुपेक्षया मुद्रापणे तत्परित्यागे हेतुरप्यनुपलभ्यत इत्यस्माभिस्तदेतच्छ्लोकत्रयं यथायोगं यथामति च प्रकरणसङ्गतिलोभेन तत्तत्स्थलेषु प्रक्षिप्य व्याख्यातभिरत्रैवावेद्य व्याख्यायते च । तदस्येयमवतरणिका बोध्या ।

पूर्वश्लोके जाड्यरूपपुरुषापचारपरिहरणद्वारेण व्यवहारलोपजगदान्ध्यादिकं पुरुषदोषत्वव्यवस्थापनेन निरस्य नादवागर्थत्रिपुट्या नादनवकत्रिपुट्या वा निरस्तसकलक्रियाक्रमे, दहराकाशे तुरीयजाग्रदवस्थापन्नस्वरूपसाधकस्य खेचर्यभेदेन सकलखेदहारितया शिवत्वसमवाप्तिकारणतां स्पष्टयति— खे निरस्तेत्यादिना । निरस्तसकलक्रियाक्रमे— "संवित्क्रममिमं देवि श्रुणु वक्ष्यामि सुन्दर । सृष्टिं स्थितिं च संहारानाख्यभासास्वरूपकम् ॥१॥ ज्ञानमात्रं च मेळापं शाक्तं शाम्भवसंयुतम् । ज्ञानं सृष्टिं विजानीयात् स्थितिर्मन्त्रः प्रकीर्तितः ॥२॥ संहारं च महाकालमेळापं परमं

विदुः । अनाख्यं शक्तिरूपं तु भासाख्यं शम्भुरूपकम् ॥३॥ पञ्चप्रकारमेतद्धि विज्ञेयं तत्त्वदर्शिभिः ॥" इति श्रीक्रमसिद्ध्याद्युक्तक्रमेण सकलक्रियाक्रमस्यापि चिदेकशरणत्वेन निरस्तः । बाह्यसकलसृष्ट्यादिक्रियाक्रमः यस्मिंस्तादृशे खे दहराकाशे । शाश्वतोदया या चितिः चरति सैव शिवत्वसमवाप्तिकारिणी । अतएव सकलखेदहारिणी च । दहरैकमात्रविश्रान्त्या सकलखेदहन्त्री च । इति व्योमवामेश्वर्यभेदेन तादात्म्येन वा खेचरीस्वरूपलक्षणमेतत् । अतएव श्रीक्रमसिद्धौ- "व्योम वामेश्वरी संज्ञा नादभूमिश्च खेचरी । आनन्दादिक्चरीसंज्ञा गोचरी मन्त्रभूमिका ॥१॥ मन्त्राणां द्रव्यरूपत्वादावलिर्भूचरी मता ॥" इति । अतएव तन्त्रालोकेपि एकादिसहस्रारचक्रपर्यन्तं विश्वचक्रक्रमनियामकस्य विश्वेशानस्य शिवस्य स्वीयविश्वचक्रशक्तिविजृम्भणमपि कण्ठरवेणोद्घोषितम् । यथा- "एकवीरो या मलोत्थस्त्रिशक्तिश्चतुरात्मकः । पञ्चमूर्तिष्षडात्मायं सप्ताष्टकविभूषितः ॥१॥ नवात्मा दश दिक्छक्तिरेकादश निजात्मकः । द्वादशारमहाचक्रनायको भैरवः स्थितः ॥२॥ एवं यावत्सहस्रारे निस्संख्यारेपि वा विभुः । विश्वचक्रे महेशानो विश्वशक्तिर्विजृम्भते ॥३॥ इत्युक्तत्वादिदमेव शाक्तविसर्गस्वभावापन्नस्य शाम्भवविसर्गगर्भस्थस्याणवविसर्गसाधकवीरधौरेयस्य बहिर्विजृम्भणमपीति बोध्यम् ॥३४-५६॥

एवं वागर्थसामरस्येन नाथनवकत्रिपुट्यां व्यवहारलोपं, जगदान्ध्यप्रसक्तिं च सकलखेदहारित्वफलप्रदर्शनपूर्वकं परिहृत्य तत्रैव स्वाभिन्नाभिन्नयोः स्वाभेदनियमानुरोधेन जगज्जीवपरात्मनां नादाभिन्नविसर्गत्रयरूपतां, बिन्दुत्रयरूपतां वापि सिद्धान्तयति—

विश्वमेतदिति या (यो) द्वमित्यसौ
नामरूपविरहेण निश्चि (ताः) ता ।
सा त्वमम्ब! न बिभर्षि भास्य (स्व) तां
आत्मनो यदसि धर्म ईशितुः ॥५६॥

विश्वमित्यादिना । हेअम्ब! एतत् हस्तनिर्देशार्हसम्बोध्याऽसम्बोध्यचेतनाचेतनवागर्थनादविलासात्मकं, अनाश्रितादिकालशिवान्तं वा भुवनसमू-

हात्मकं। विश्वमिति या आणवविसर्गविलासवैखरीषडध्वशाक्तविसर्गशब्दरूपिणी वाक्। विश्वमेतदिति योहमित्यसाविति पाठे– एतदिति चित्तविश्रान्तिलक्षणाणवविसर्गवैखर्यर्थषडध्वविलासात्मकं चराचरं विश्वमिति। तथा अहमिति ః ० । अंह्ः म्। महः। इत्याकारेण चित्तप्रलयलक्षणशाम्भवविसर्गविलासाहंमन्त्रवागर्थनादलक्षणोहमिति। तथा 'यः असौ। अस्-औ' इत्याकारेण चित्तसम्बोधलक्षणप्राणस्पन्दशाक्तविसर्गविलासपरामन्त्रवागर्थलक्षणो जीव इति तदात्मिका जीवशक्तिरिति, मह इति वा। नामरूपविरहेण नामरूपे विहायेत्यर्थः। या वाक् तदीयशब्दशक्तिः, यश्शब्दस्तदीयाभिधेयार्थो वा 'अजामेकां लोहितशुक्लकृष्णां ह्वीं प्रजां जनयन्ती गं सरूपाम्' इत्यादिमन्त्रवागर्थरूपा निश्चिता। बहुवचनपाठे– वाक् तदीयशब्दशक्तिः शब्दस्तदीयाभिधेयलक्ष्याद्यर्थश्चेति मिलित्वा आणवशाक्तशाम्भवविसर्गत्रयसमष्टिविलासरूपाः ये बिन्दुत्रयचतुष्टयात्मकवागर्थत्रसरेणवः निश्चिता इत्यर्थो वैदितव्यः। वागर्थमर्यादायां मातृकास्वरखण्डेवेति शेषः। सा त्वं तादृशवागर्थकामकलाविन्दुत्रयसमष्टिरूपिणी त्वम्। भास्वतां प्रकाशस्वभावतां न विभर्षि। भास्यतामिति पाठे– प्रकाश्यतां न बिभर्षीत्यर्थः। कुत इति चेत् यद्यस्मात् आत्मनः प्रकाशात्मकस्यान्तर्लीनविमर्शशक्तिकस्य ईशितुः कृत्यपञ्चकनियामकस्य। तदुक्तं कामकलाविलासे– "सकलभुवनोदयस्थितिलयमयलीलाविलासनोद्युक्तः। अन्तर्लीनविमर्शः पातु महेशः प्रकाशमात्रतनुः॥" इति। उक्तविसर्गत्रयविलासप्रकाशकस्येति यावत्। परशिवकालरूपस्य। धर्मः तद्धारकनादरूपिणीत्यर्थः। असि अतोभास्यतां न बिभर्षीति पूर्वेणान्वयः। एवमागममर्यादया व्याख्याय वैदिकवागर्थविसर्गपरत्वेनाप्ययमेव श्लोकः पुनरपि व्याख्यायते—

एतत् हस्तनिर्देश्यवागर्थविलासात्मकं विश्वमिति या बुद्धिः। योहमिति पाठे– यः अभिमानः। तथा अहमिति, असाविति च। या बुद्धि र्यो वा अभिमानः। तथाचोक्तं श्रुत्या यष्टुर्भावना वासनाप्रकारभेदं यागकालिकमभिसन्धाय दर्शपूर्णमासेष्टिप्रकरणस्थया "देवाः पितरः पितरो देवाः।

योहमस्मि स सन् यजे । यस्यास्मि न त मन्तरेमि । स्वं म इष्टग्ं स्वं दत्तं। स्वं पूर्तग्ं स्वग्ं श्रान्तं । स्वग्ं हुतं । तस्य मेऽग्निरुपद्रष्टा । वायुरुपश्रोता । आदित्योऽनुख्याता । द्यौः पिता । पृथिवी माता । प्रजापतिर्बन्धुः । य एवास्मि स सन् यजे । इत्यादिकया यागकालिकनामरूपविरहितमुख्यात्मवृत्त्यभिमानवासनादिप्रतिपादिकया । तथा शारीरकब्रह्ममीमांसाभाष्येऽपि श्रीशङ्करभगवत्पूज्यपादैरात्मनोऽत्यन्तवृत्त्यविषयत्वमाशङ्क्य ज्ञानोपासनाद्यधिकारतारतम्येनास्मत्प्रत्ययवृत्तिविषयत्वं व्यवस्थापितं । यथा- "नायमत्यन्तेनाविषयः । अस्मत्प्रत्ययविषयत्वात् । प्रत्यगात्मत्वप्रसिद्धेश्च" इति । तथैव- "योहमस्मि ब्रह्माहमस्मि । अहमस्मि ब्रह्माहमस्मि । अहमेवाहं मां जुहोमि स्वाहा" इत्यादिना अवस्तुत्वेन मिथ्याभूतयोर्विश्वाहन्तयोर्विश्वादस्त्वयोर्वा हव्यत्वेनात्मनो होमकर्तृत्वेन च मान्त्रवर्णिकी नामरूपांशयोरात्मनश्चास्पष्टहोतृहविष्ट्वलिङ्गता च यस्मात्तस्मात् । असौ पूर्वोक्तत्रिचतुःपञ्चान्यतमप्रकारा या बुद्धिः । नामरूपविरहेण नामरूपशून्यतया नामरूपे विहाय "अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् । आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्" इत्युक्तसत्तास्फूर्त्यानन्दत्रिपुट्यात्मनावा सच्चिदानन्दघनजीवब्रह्मैक्यस्वरूपात्मना वा निश्चिता । निश्चिता इति बहुवचनपाठे- या बुद्धयो ये चाभिमाना वा निश्चिता इत्यर्थः । सा त्वं तादृशबुद्ध्यभिमानोभयरूपिणी त्वम् । भास्यतां प्रकाश्यतां न बिभर्षि । त्वत्स्वरूपस्य यथाधिकारं भ्रान्त्यभ्रान्त्युभयबुद्ध्यात्मकत्वेन उभयथापि साक्षिमात्रभास्यत्वेन च घटपटादिवत् बाह्यप्रकाश्यरूपतां न बिभर्षीत्यर्थः । भास्वतामिति पाठे- प्रकाशैकस्वभावतां न बिभर्षीत्यर्थः । चिन्मयप्रकृत्यास्तव प्रकाशविमर्शोभयात्मकत्वादिति भावः ।

तत्र हेतुमाह—आत्मन इति । आत्मनः प्रकाशैकस्वरूपस्य ईशितुः अन्तर्बहिर्नियामकस्येश्वरस्य । यद्यस्मात् धर्मासि अन्तर्लीनविमर्शत्वेन प्रकाशैकस्वभावस्य धर्मिणः बहिरन्तश्चाविलीनप्रकाशविमर्शस्वाभाव्येन धर्मस्य च वस्तुस्वरूपे भेदाभावेन परसंवित्सच्चिदानन्दात्मरूपमेकमेव वस्तु मायाविद्यापरपर्यायधर्मिधर्मात्मकनामरूपांशभेदेन विश्वमित्यहमिति असावित्यह-

मिति वा व्यवह्रियत एव केवलं नानुभूयत इत्यक्षरार्थः । अतएव मायायाः स्वस्वरूपभेदविवक्षया वार्तिकोदाहरणपूर्वकं वेदांतपञ्चदश्यां श्रीविद्यारण्यगुरुसार्वभौमैः स्फुटमुपपादितं । वस्तुत्वमवस्तुत्वं च यथा "तुच्छा निर्वचनीया च वास्तवी चेति च त्रिधा । ज्ञेया माया त्रिभिर्भेदै (र्बोधैः) श्रौतयौक्तिकलौकिकैः ॥" इत्यादिना अधिकारितारतम्येन मायायाः (बुद्धे) र्वैविध्यमुपन्यस्य श्रौताधिकारिदृष्ट्या वैपरीत्येन पुरुषस्त्र्यादिवेषधारिस्त्रीपुरुषादिवत्तुच्छरूपता । यौक्तिकशाब्दिकतर्कदृष्ट्या अनिर्वचनीयता । प्राकृतदृष्ट्या वस्तुरूपताचात्मभेदेन निरणायि । ततो विशिष्टाद्वैतभागवतादियुक्तिप्रधानवादानां वेदहृदयपरमार्थस्वस्वरूपा पर्यवसायित्वेनासम्पूर्णतापि दर्शिता यथा—

श्लो॥ 'प्रसरन्ति हि चोद्यानि जगद्वस्तुत्ववादिषु । न चोदनीयं मायायां तस्याश्चाद्वैतरूपतः ॥१॥ चोद्येपि यदि चोद्यं स्यात्त्वच्चोद्ये चोद्यते मया । परिहार्यं ततश्चोद्यं न पुनः प्रतिचोद्यताम् ॥२॥ (विस्मयैकशरीरिण्या मायायाः किं नु दुश्शकम् ) दुर्घटैकविधायिन्यां मायायां का चमत्कृतिः । द्रवत्वमुदके वह्नावौष्ण्यं काठिन्यमश्मनि॥३॥ मायायां दुर्घटत्वं च स्वतस्सिद्ध्यति नान्यतः । न वेत्ति मायिनं लोको यावत्तावच्चमत्कृतिम् ॥४॥ धत्ते मनसि पश्चात्तु मायैषेत्युपशाम्यति । अन्वेष्यः परिहारो स्याः बुद्धिमद्भिः प्रयत्नतः ॥५॥ माया त्वमेव निश्चेयमिति चेत्तर्हि निश्चिनु । लोकप्रसिद्धमायाया यत्तल्लक्षणमीक्ष्यताम् ॥६॥ न निरूपयितुं शक्या विस्पष्टं भासते च या । सा मायेतीन्द्रजालादौ लोकास्संप्रतिपेदिरे ॥७॥ मायामयं जगत्तस्मादीक्षस्वापक्षपाततः । निरूपयितुमारब्धे निखिलैरपि पण्डितैः ॥८॥ अज्ञानं पुरतस्तेषां भाति कक्ष्यासु कासु चित् । देहेन्द्रियादयो भावाः वीर्येणोत्पादिताः कथम् ॥९॥ कथं वा तत्र चैतन्यमित्युक्ते ते किमुत्तरम् । वीर्यस्यैष स्वभावश्चेत्कथं तद्विदितं त्वया ॥१०॥ अन्वयव्यतिरेकौ चेद्भग्नौ तौ वन्ध्यवीर्यतः । न जानामि किमप्येतदित्यन्ते शरणं तव ॥११॥ अतएव महान्तोस्य प्रवदन्तीन्द्रजालतां ॥ एतस्मात्किमिवेन्द्रजालमपरं यद्ग-

र्भवासे स्थितं रेतश्चेतति हस्तमस्तकपदप्रोद्भिन्ननानांकुरम् । पर्यायेण शिशुत्वयौवनजरावेषैरनेकैर्वृतं पश्यत्यत्ति श्रुणोति जिघ्रति तथा गच्छत्यथा गच्छति ॥१२॥ इत्यादिना मायाविद्यादिवादानां स्वरूपतत्त्वावगाहाय बुभुत्सुमन्दाधिकार्यनुग्रहेण तीर्थकरैः कल्पितपूर्ववादत्वं स्फुटमुपपादितमिति जगज्जीवमरात्मभेदेन साधनभक्तिमात्रपर्यवसायीनि विशिष्टाद्वैतभागवतादियौक्तिकमतानि आगममात्रपरिभाषावलम्बेन परमश्रुतितात्पर्यानैनुगतान्यपि वैदिकाहंग्रहोपास्तिपरैस्सम्पत्प्रतीकाद्युपास्तिविशेषपरत्वेन खण्डदृष्ट्यापि वैदिकत्वेनादृतान्येवेत्यलमतिप्रसङ्गेन ॥३४-५६॥

ननु शुद्धाद्वैतलोभेन परमश्रुतितात्पर्यलोभेन वा खण्डदृष्ट्यापि वैदिकरामानुजपूर्णप्रज्ञादिदर्शनेष्विव जडाजडयोर्जगज्जीवयोः स्वरूपभेदानङ्गीकारे जगन्नाशेन सर्वनाशापत्तेः बौद्धाभिमतमाध्यमिकशून्यवादः क्षणभङ्गवादो वाऽनुगृहीतस्स्यादित्याशङ्क्य आगमौपनिषद्भाषाभ्यां बुभुत्सुप्रबुद्धाधिकारिदशाभेदेन च स्वात्माभिन्नोन्मनीनादनवके प्रतिसञ्चरणभेदेन वागर्थषडध्वद्वादशान्तमहाबिन्दौ वा नादस्वरूप एव तटस्थेश्वरकारणकत्वाजातसृष्टिवादयोस्सिद्धान्तितत्वा न्न जातुचिदप्यागमौपनिषत्त्वयोर्माध्यमिकादिसमयानुप्रवेशस्तदनुकरणं वेति परिहरति—

**भावदृक्स्मृतिवियुक्तमीश्वरे**
**शून्यरत्नमवलम्ब्य पुद्गलम् ।**
**निर्णिरुक्तिकमिदं जगत्स्थितं**
**चिल्लयोर्ध्वगपथान्न तत्तथा ॥५७॥**

भावदृगित्यादिना । ईश्वरे पूर्वोक्तपरामर्शषट्कान्तर्गतईशनपरामर्शात्मरूपे तुरीयवागर्थनियन्तरीत्यर्थः । भावदृक् । भवस्य अकारादिवर्णसमाम्नायस्रष्टुः शिवस्यायं भावः वागर्थसृष्ट्यादिकृत्यपञ्चकषडध्वादिरश्मिरूपशिवसंसार इत्यर्थः । सः दृश्यते अस्मिन्नादरूपे इति भावदृक् । तथा स्मृतिवियुक्तं अयमहमस्मि चैत्रो मैत्रो वेत्यादिपूर्वश्लोकोक्तविभ्रमयात्मस्मृतिः वियुज्यते नादतादात्म्येनात्रेति स्मृतिवियुक्तम् । तथा शून्यरत्नं "ऊर्ध्वे

शून्यमधश्शून्यं मध्ये शून्यं निरामयम् । त्रिशून्यं यो विजानाति स गुरुः कथितः प्रिये" इति जपप्रकरणे तन्त्रोक्ताध्वषट्कविषुवत्सप्तकशून्यषट्कादिमन्त्रजपाङ्गेषु नादस्वरूपानुसन्धेयशून्यानि रत्नानीव यस्मिन्नुन्मनीनादनवकस्वरूपे विद्यन्ते तच्छून्यरत्नं ।' तथा पुद्गलं पुंभावः गलत्यस्मादिति पुद्गलं च । ईदृशं नादनवकमवलम्ब्य इदं साक्षिभास्यतया परिदृश्यमानवागर्थात्मकं जगत् निर्णिरुक्तिकं नितरां निरुच्यते शब्दतत्त्वं निर्वक्तुं न शक्यते चार्थतत्त्वमिति व्युत्पत्तिभेदेन निर्निरुक्तिकं यथा भवति तथा स्थितम् ।

ननु 'अ इ उण्' इत्यादिमाहेश्वरचतुर्दशसूत्रीमातृकावागर्थतत्त्वस्य चतुस्सूत्रीमात्रस्वरखण्डवागर्थतत्त्वस्य वा "बिन्द्वर्धचन्द्ररोधिन्यो नादनादान्तशक्तयः । व्यापिका समनोन्मन्यो नवनादाः प्रकीर्तिताः" इत्युक्तत्रिपुटीत्रयात्मकसमनानादतत्त्वे उन्मनीनादतत्त्वे वा वैराजेऽन्तर्भावादस्तु वैराजवागर्थतत्त्वात्मकं जगत् निर्निरुक्तिकं । द्वादशान्तमहाबिन्दुगतोन्मनीनादतत्त्वे त्रिपुटीरहिते वैराजवागर्थत्रिपुटीलयस्याज्ञानात्तत्र माध्यमिकाभ्युपगतशून्यरूपत्वमेव वागर्थजगतस्तस्मात्सर्वनाश इत्याशङ्क्य तत्रापि वक्ष्यमाणगुरुपुष्पसङ्कोचक्रमेण दिव्यौघसन्ततेः "तत्पुनर्झटिति नीतसन्ततिः" इति तृतीयविमर्शगुरुक्रमरश्मिषु वक्ष्यमाणप्रकारेण नीतसन्ततित्वा न्न माध्यमिकशून्यवादप्रसङ्गावकाश इत्याह— चिल्लयेति । चितः अयमहमस्मीत्यादि वैराजबाह्यवागर्थवैखरीमात्रविज्ञानस्य । लयो बिन्द्वादिशक्त्यन्तनादनवकान्तर्गतपूर्वोक्तबाह्यवैराजनादषट्कातिक्रमेण तत्रैव व्यापिका समनोन्मनीरूपविमर्शोत्तीर्णनादमयदिव्यवागर्थतापादनेन वा लीयमानप्राकृतविराड्रूपस्य प्राप्तदिव्यरूपस्य वा नादस्य तादात्म्यापादनं चिल्लयः । तादृशस्य चिल्लयस्य द्वादशावयवकप्राकृतप्राणात्मकसौरनादस्वरूपलयस्येत्यर्थः । ऊर्ध्वं त्रयोदशावयवात्मकद्वादशान्तमहाबिन्दुस्थानं गच्छतीति चिल्लयोर्ध्वगः सचासौ पन्थाः चिल्लयोर्ध्वगपथम् । उन्मन्यूर्ध्वगतनादस्वरूपानुसन्धानमार्ग इति यावत् । तस्मात् चिल्लयोर्ध्वगपथात् । तदवाप्ये तिल्यब्लोपे पञ्चमी ।

तदवाप्यापि तज्जगत् तथा न । पूर्वोक्तवैराजावस्थायमिव माध्यमिकाभ्युपगतशून्यात्मकं न भवति । किन्तु विश्वमयत्वेपि विश्वोत्तीर्णात्मस्वाभाव्यं गच्छतीति भावः । अतएव तन्त्रेषु मन्त्रजपप्रकरणे नादस्वरूपानुसन्धातुरुत्तमाधिकारिणः प्रथमं वैराजवैखरीवागर्थविलयमभिसन्धाय स्वदेहे शून्यताविभावनं विहितम् । वक्ष्यतिच तृतीयविमर्शे–"शून्यमम्बमहमुच्यते त्वया" 'शून्यमम्ब गगनं हि या महत्" इत्यादौ शून्यविभावनस्वरूपविवरणं । एवमागमवर्णसमाम्नायवागर्थनादपरशाब्दधर्मेण व्याख्याय सर्वश्रुतितात्पर्यविषयकशब्दमूलमुख्यप्राणमयौपनिषदपुरुषपरत्वेनाप्ययमेव श्लोको यथासम्भवं व्याख्यायते ।

ईश्वरे विषये भावदृक् । जगत्कारणं भावपदार्थरूपमेव न पुनश्शून्यमिति दृक् यस्य तद्भावदृक् । परोक्षचिन्मयमित्यर्थः । स्मृतिवियुक्तं स्मृत्या "यद्यनंक्ष्यदनुभूतिरीश्वरे संस्मृतिः सदृशवस्तुबोधिका" इत्यादिना तुरीयविमर्शे वक्ष्यमाणलक्षणेन तत्स्मरणेन वियुक्तं जडमयं च । इदं परिदृश्यमानं जगत् शून्यरत्नं रत्नशब्देनात्र औपनिषदं ज्ञानं विवक्षितम् । तैत्तिरीयारुणप्रपाठके "अन्धो मणिमविन्दत्" इत्यादिश्रुतौ रत्नपर्यायमणिशब्देन तस्यैव विवक्षितत्वात् । शून्यरत्नं औपनिषदज्ञानरत्नशून्यम् । जगत्कारणवस्तुज्ञानशून्यमित्यर्थः । तादृशं पुद्गलं पुत् पुत्तिका गलत्यस्मादिति पुद्गलं । इति निरुक्त्या बौद्धसमयपारिभाषिकं यत् मध्यमपरिमाणवत् स्थूलशरीरं तद्गलितमित्यर्थः । तादृशं मुख्यप्राणकोशं अवलम्ब्य निर्निरुक्तिकम् "स देव सोम्येदमग्र आसीत् असद्वा इदमग्र आसीत्" न ह्यसतस्सज्जायेत" इत्यादिश्रुतियुक्तिविरोधात् सत्वेनासत्वेन वा निरुक्तुमशक्यम् । यद्यपि माध्यमिकादिमतान्तरेषु तथापि स्थितम् । तत् ईश्वरात्मना महास्थितिरूपं न माध्यमिकादिमतेष्विव शून्यम् । सत्कार्यवादेन ईश्वराभ्युपगमादिति भावः ।

ननु यदि माध्यमिकाद्यवैदिकमतान्तरद्वेषाभिनिवेशेन जगतस्सत्कार्यवादस्वीकारेण सृष्ट्याद्यभ्युपगमः हन्त तर्हि त्रिविधभेदरहितश्रुत्यन्ताद्वितीया-

त्मवस्तुवादिनस्तत्र स्वसिद्धान्तव्याहतिः भागवताद्येकदेशाद्वैतदशा परसिद्धान्तानुकरणं चेत्युभयतः पाशारज्जुरापततीतीमामाशङ्कामजातवादसिद्धान्तमाश्रित्य सदीश्वरकारणकत्ववादस्य वागर्थोपासनार्थत्वेन वेदकल्पितत्वं च द्योतयन्विदेहमुक्त्यवस्थां बहिरुद्घाटयति— चिल्लयेति । चिल्लयोर्ध्वगपथादित्यत्रापि 'ल्यब्लोपे पञ्चमी' चिच्छब्दवाच्यानां प्राणवृत्तीनां लयादूर्ध्वगः यः पन्थाः "न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते" इति श्रुत्युक्तजीवन्मुक्तस्य विदुषः प्राणानामुत्क्रान्त्यभावेनात्रैव लयश्रवणात् । चिल्लयोर्ध्वगपथं विदेहजीवन्मुक्तप्राणवृत्तीनां लयमार्गमवाप्य तज्जगत्तथा न । सत्कार्यवादिसांख्यभागवतादिसमयाङ्गीकृतप्रकारकमपि न भवति । कुतः- "न जायते म्रियते वा विपश्चित्" "सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चन" इत्यादिना जगज्जन्मादौ तत्स्वरूपभेदे वा श्रुत्यन्तरनिषेधात् । अत्रायमाशयः "यतो वा इमानि भूतानि जायन्ते" इत्यादिकृत्यत्रयादिबोधकसत्कार्यवादिश्रुतिविरोधभयेन सांख्यादिमतेष्विव औपनिषत्सिद्धान्तेपि आविद्यकजीवोत्क्रान्तिदशायां जगतो जीवाश्रयत्वाङ्गीकारेपि चिल्लयोर्ध्वगपथापादानकविद्यानादमयवागर्थजगतः विद्वदात्माभिन्नरूपत्वेन तस्य च "न जायते म्रियते वा विपश्चित्" "न तस्य कार्यं करणं च विद्यते' 'न तस्य प्राणा उत्क्रामन्ति' इत्यादिकर्तृकार्यक्रियाकरणकारकादि निषेधक श्रुत्यन्तरबलेनाजातसृष्टिवादस्य सिद्धान्तितत्वा न्न जातुचिदपि माध्यमिकक्षणभङ्गाद्यवैदिकमतानुप्रवेशः,नापि सांख्यभागवताद्येकदेशिमतानुकृतिर्वा सम्भवतीति । अजातसृष्टिवादसिद्धान्तविवरणं तु गौडपादकारिकास्वद्वैतप्रकरणे द्रष्टव्यं ग्रन्थविस्तरभयान्नेह विवृतम् ॥३९-५७॥

अथोक्ताजातसृष्टिवादसिद्धान्तदार्ढ्यायानाश्रितशिवादिकालाग्निरुद्रान्ततत्त्वजातमेव वास्तवं शाब्दजगत्स्वरूपमिति व्युत्पादयति—

शान्ततां भजदनाश्रितं पदं
शक्तिमात्रजगदेकसद्म यत् ।
निर्मलज्वलनशौचवज्जग
त्तत्र हि त्विषि निमज्जितं त्वया ॥५८।

शान्ततामित्यादिना । यत् अनाश्रितं पदं 'अन चलने' इति धातोः प्राणस्पन्दाश्रितं एकाशीतिपदेषु प्रथमम् । शिवतत्त्वं यत् शक्तिमात्रजगदेकसद्म वाक् शक्तिरेव शक्तिमात्रं । यज्जगत् तस्य एकसद्म मुख्यगृहम् । यद्वा मीयन्त इति मात्राः शब्दादयः । अर्थमात्रादिएकद्वित्रिचतुर्मात्रा वा रङ्गप्लुतान्ता वा नादावयवाः कालाः । मात्राणां शक्तयः शक्तिमात्राः । ताएव जगत् तस्य एकसद्मेति वा । तत्र अनाश्रितशिवतत्त्वनाम्नि त्विषि महाप्रकाशे जगत् परिदृश्यमानं जडाजडात्मकजीवजातम् । निर्मलज्वलनशौचवत् । मलापकर्षकसङ्कर्षणाख्याग्निशौचसम्पादनार्थमिवेति फलोत्प्रेक्षा । अलङ्कारप्रक्रियया यथा लोके स्वर्णकारः सुवर्णादिधातून् मलशोधनार्थमग्नौ दहति तद्वदिति । प्रलयाग्नौ दाहार्थमिवेति यावत् । वस्तुदृष्ट्या तु निर्मलज्वलनशौचवत् । निर्मलं निर्गताणवादित्रिविधमलं यत् ज्वलनशौचं । चिदग्नेः स्वाभाविकी शुद्धिः तदस्यास्तीति निर्मलज्वलनशौचवदिति मत्वर्थे वतिप्रत्ययः । त्वया निमज्जितं हि निर्मलषड्ध्वात्मकमपि सुवर्णकान्तितुल्यकान्तिलाभार्थं निमज्जितमिति भावः । हीति हेतौ निपातो वा । हि यस्मात् त्वया निमज्जितम् । जगत् तस्मात्तदेव शान्ततां भजत् सत् अनाश्रितं पदं भवतीति । शक्तिमात्रशरीरेण जगतः पारोक्ष्यावस्थितिरेवानाश्रितशिवतत्वाख्यशिवाभिन्नात्मसक्षात्कृतिरिति पूर्णप्रशान्तता । न माध्यमिकादिमतान्तराभ्युपगतसर्वनाशाख्यशून्यरूपतेति न मतान्तरप्रवेशानुकृतिप्रभृतिदोषावकाश इति भावः ॥३६-५८॥

उक्तानाश्रितशिवतत्वे मातृभानभानात्मकत्रिपुट्याः भानमात्रशरीरत्वान्नाद्वैतसिद्धान्तव्याहतिशङ्कावकाशोपीत्याह—

सिद्धशक्तिमयमातृभासन
व्याप्तिभा (व उपयुक्) त इति यत्) प्रकाशताम् ।
योयमर्थनिकरस्त्व(दन्ति (माम्बि)के
त्वत्प्रमात्रभिमुखं तनोष्यसौ ॥५९॥

सिद्धशक्तीत्यादिना । हेअम्बिके! त्वदन्तिके इति पाठे त्वत्समीपे

योयमर्थनिकरः शब्दस्पर्शादिवाग्रूपः घटपटाद्यर्थरूपश्च। धर्मादिचतुर्वर्ग-पुरुषार्थनिकरश्च। सिद्धशक्तिमयभातृभासनव्याप्तिभावः। सिद्धस्यात्मनः शक्तिमयः ज्ञानक्रियाशक्तिसामरस्यरूपः यो भातृभासनव्याप्तिभावः। देश-कालादिविप्रकर्षेऽपि अप्रतिहतज्ञानशक्तिमयः भातृव्याप्तिभावः। तादृश-क्रियाशक्तिसिद्धिरूपः भासनव्याप्तिभावश्च यस्य स तथोक्तस्सन् प्रकाशता मुपयुक स्वयंप्रकाशत्वोपयोगी भवति। यद्वा, सिद्धशक्तिमयभातृभासनव्या-प्तिभावे प्रकाशतां स्वयंप्रकाशतां प्रति उपयुग्भवतीति वा। व्याप्तिभातइति यत्प्रकाशतामिति पाठे– प्रकाशतां स्वयंप्रकाशतां प्रति सिद्धशक्तिमयभातृ-भासनव्याप्त्या भातः प्रकाशितस्सन् यत् यस्मात्प्रकाशता मुपयुग्भवति त-स्मात्। असौ चित्तप्रबोधप्रधानं शाक्तविसर्गविलासशब्दनिकरात्मकप्रत्य-क्षपरामन्त्रवाग्रूपिणी, चित्तप्रलयप्रधानं शाम्भवविसर्गविलासपरोक्षा, पराम-न्त्रार्थघटपटाद्यभिधेयार्थरूपिणी, परोक्षाऽपरोक्षचतुर्विधपुरुषार्थरूपिणी वा त्वम्। त्वत्प्रमात्रभिमुखं प्राक् त्वद्भिन्नप्रमात्रभिमुखत्वेनेव विद्यमानं वागर्थ-निकरं इदानीं त्वदभिन्नप्रमात्रभिमुखं यथा भवति तथा तनोषीत्यर्थः। अत्रावस्थायां त्रिपुटीभेदभानस्य स्वयंप्रकाशात्मतत्त्वैकरस्याद्वैतस्वरूपव्याह-तिशङ्कावकाशइति भावः ॥३७-५९॥

एतावता ग्रन्थसन्दर्भेण चिदचिन्मयवागर्थप्रकृतिसामरस्यं शब्दनाद-ज्योतिर्मयत्वेनोपवर्ण्य तन्मयस्यात्मनः स्वरूपएव साक्षित्वसंसारित्वधर्मद्वय-प्रकटनेन चिन्मयानन्दत्रिपुट्यंशप्रमातृप्रमेयभावयोर्विनिमयेनां तस्यानन्द-स्वरूपतत्वबोधनाय धामसंवित्द्वर्णक्रमैः प्रकाशानन्दमूर्तिमयचक्रत्रयोपास्ति क्रमेण विस्तारयिष्यन्नादौ संक्षेपेण धाममयप्रकाशचक्रं सूचयति—

द्रष्टृता (दृष्टता) जगति यत्प्रकाशने
यच्च निश्चयविधौ प्रमातृ (का) ता।
ग्राहक (ग्राहकं) त्वमपि निश्चितग्रहे।
वेद तत्स तव वृत्तिपोषितः ॥६०॥

द्रष्टृतेत्यादिना। जगति गच्छतीति जगत् इति 'सिंहो वर्णविपर्य-

यात्' इति सिंहादिगणपठितवर्णविपर्ययव्युत्पत्त्या वर्णागमव्युत्पत्त्या वा साधकमुख्यप्राणरूपे गतिमति जीवे इत्यर्थः । प्रकाशने विषये अन्तर्बहिरिन्द्रियप्रवृत्तिनिवृत्त्यात्मकवैषयिकव्यापारे विषये इत्यर्थः । यत् द्रष्टृता दर्शनकर्तृता । इति सर्वज्ञानेन्द्रियधर्मसामान्योद्देशविवक्षया यदिति नपुंसकम् । एवमुत्तरत्रापि ज्ञेयम् । दृष्टेति पाठे– यच्च दृग्विषयत्वं । अन्तर्बहिरिन्द्रियवृत्तिविषयत्वमित्यर्थः । निश्चयविधौ विषयतत्त्वनिश्चयविधानात्मकबुद्धिव्यापारे ; तथा निश्चितविषयव्यापारात्मिकायां कर्मेन्द्रियप्रवृत्तौ च । यच्च प्रमातृता अहंप्रमातेत्याकारकनिश्चितप्रमाश्रयत्वरूपाभ्यन्तरकर्तृव्यापारः । प्रमातृकेति पाठे– प्रकृष्टवर्णमाला, तदीयबुद्धिवृत्तिर्वेत्यर्थः । तथा निश्चितग्रहे निश्चितविषयस्वरूपसम्बन्धिनि ज्ञानेन्द्रियव्यापारे । विषयादानादिकर्मेन्द्रियव्यापारेच विषये । यच्च ग्राहकत्वमपि ज्ञानकर्मोभयेन्द्रियरूपत्वमपि । ग्राहकं त्वमिति पाठे- त्वमेव सः । सएव त्वमिति च । प्रकृष्टवर्णमातृका त्वं कं ग्राहेत्यर्थः । शाक्तविसर्गवर्णमालारूपिणी त्वं आणवशाम्भवविसर्गयोर्मध्ये कमुद्दिश्य ग्राहेति जीवमीश्वरंवा उद्दिश्येत्यर्थः । तत्सर्वं तव वृत्तिपोषितः परावाग्देवतायास्तव वक्तृत्वश्रोतृत्वादिबहिरन्तर्व्यापारेण सञ्जातपोषणस्सन् । सः पूर्वश्लोकोक्तत्वदभिन्नप्रमाता मुख्यप्राणशिवः वेद विद्यया लभते । 'विद्ल् ज्ञानलाभयोः ' इति धात्वर्थे विपरीतप्रमातृभावेन लभन् जानीते । कुत इति चेत् गजवृषभचित्रन्यायेन प्रथमं त्वदीयबुद्धिवृत्त्युपेतकर्मेन्द्रियव्यापारेण पोषितः जागतविषयवर्गं कर्ममयो लभन् पश्चान्मनोवृत्त्युपेतज्ञानेन्द्रियव्यापारपोषणेन ज्ञानमयोपि संसरन्ततस्सामरस्यव्यापारेण केवलं साक्षितया पश्यं श्चास्ते इति भावः । एतदेव नादनवकमयस्यात्मनः स्वाराज्यापरपर्यायत्रिपुटीषड्वर्गषडङ्गात्मकाष्टादशस्वरसंख्यया पंचत्रिकसमष्ट्यात्मकषोडशसंख्यया एकद्वित्रिचतुर्वर्गादिपूर्वोक्तयथासम्भवपरामर्शत्रिकादिरूपेण च स्वतो राजनरञ्जनादिरूपप्रकाशरश्मिचक्रमयत्वेन प्रवृत्तिनिवृत्तिमयस्वराज्यप्रणेतृत्वं वेदितव्यम् । वक्ष्यति चाग्रेपि कविरेव--"राजनात्प्रकृतिरञ्जनाच्च मां राजसंज्ञ"मित्यादिना ज्ञान-

क्रियाराज्यभागयोर्विविच्य षण्णां ज्ञानकर्मेन्द्रियचक्रभावभेदेन राजपुत्रभावं पार्थक्येन समष्ट्याचात्मनो राजभावं चेति प्रकाशचक्रसूचनम् ॥३८-६०॥

अथ पूर्वश्लोकसूचितत्रिपुटीत्रयनादनवकसमष्टिधाममयप्रकाशचक्रस्य शाक्तशाम्भवानुत्तरविसर्गत्रयसमष्टिविलासात्मकसदसद्वागर्थमण्डले धीमनोक्षवपुरस्मितायाश्च स्वातन्त्र्यास्वातन्त्र्याभ्यां स्वस्वरूपशेषशेषिभावप्रयुक्तं चतुर्थविमर्शे वक्ष्यमाणमूर्तिप्रकाशचक्रप्राधान्योपकारकमंशांशिप्राधान्यभावं पाठभेदेन विविच्य दर्शयति—

**आस्थितस्सदसदर्थमण्डलं**
**धीमनोक्षवपुरस्मितामयम् ।**
**यत्र यो दशविधः (यत्र या दशविधिः) स्वतन्त्रता**
**तद्वयोप्यहमसौ तवांशकः (तवाधिकः) ॥६१॥**

आस्थित इत्यादिना। अयं पूर्वश्लोकोक्तशाम्भवाणवान्यतरविसर्गमयो मुख्यप्राणशिवः। धीमनोक्षवपुरस्मितां सदसदर्थमण्डलमूलकारणभूतामिति भावः। सदसदर्थमण्डलंच आस्थितः। आणवविसर्गविलासात्मना अधिष्ठितः। यत्र धीमनोक्षवपुरस्मितायां तत्कार्यसदसदर्थमण्डलेच। यः आणवविसर्गविलासापन्नमुख्यप्राणशिवः। दशविधिः धीप्रधानकर्माक्षवपुरस्मिताप्रकारेणपञ्च मनःप्रधानज्ञानाक्षवपुरस्मिताप्रकारेण पञ्चचेत्याहत्य दशज्ञानकर्मेन्द्रियाणि विधीयन्ते अनेनेति दशविधिः। तथा व्यावहारिकसदर्थपञ्चकात्मना प्रातिभासिकासदर्थपञ्चकात्मनाच सदसदर्थमण्डलेपि दशविधिः। किञ्चात्र यस्त्रयो दशविध इति पाठे-याभ्यां धीमनोक्षवपुरस्मितासदसदर्थमण्डलाभ्यां तयोदशविधः। सदसदर्थमण्डलोक्तदशप्रकारभेदेन धीवपुरस्मितामनोवपुरस्मिताक्षवपुरस्मितामयत्रिप्रकारकास्मिताभेदेन च वक्ष्यमाणद्वादशान्तमहाबिन्द्वभिन्नत्रयोदशप्रकारश्चायमाणवविसर्गात्मकः प्राणशिव इत्यपि ध्वन्यते "प्राणसूर्य इह चिद्विषट्कलः" इत्यादि वक्ष्यमाणत्वात्। यद्वा पूर्वोदितयत्र या दशविधिरिति पाठभेदपक्षे यत्र सदसदर्थमण्डले या धीमनोक्षवपुरस्मितापि दशविधिः

स्वतन्त्रताऽतद्द्वयोपि स्वतन्त्रतया धीमनोक्षवपुरस्मितामयात्मस्वातन्त्र्येण स्वतन्त्रताऽतद्द्वयोपि स्वतन्त्रतया धीमनोक्षवपुरस्मितामयात्मस्वातन्त्र्येण अतद्द्वयोपि चित्तप्रलयात्मकशाम्भवविसर्गविलासेन वपुरस्मिताप्रसक्तसद्स-दर्थमण्डलद्वयरहितोपि । यद्वा चित्तप्रबोधात्मकशाक्तानुत्तरविसर्गविलासेन पूर्वोक्त 'अ इ उण्' इत्युक्तनादनवकयोनिस्वरभूतानुत्तराकारात्मकतदुभयवि-लासोपि अकारगततद्द्वयविलासः अतद्द्वयविलास इति व्युत्पत्त्या स्वतन्त्र-तासिद्धाऽतद्द्वयविलासोपीति वा । तवांशकः अहं इति शाम्भवविसर्गविला-सात्मना नादप्रधानेन । असौ इति शाक्तानुत्तरविसर्गविलासात्मना वा शाब्द-बिन्दुप्रधानेन । तव नादनवकात्मिकाया अंशकः । नादात्मना वागर्थशब्दा-त्मना वा अप्रच्युताणवविलासात्मधर्मकत्वात्त्वदीयांशरूपएवेत्यर्थः । तवाधि-क इति पाठे– शाम्भवविसर्गविलासनादाकारेण शाक्तानुत्तरविसर्गविलास-वागर्थसामरस्यात्मना वा । अहमेवासौ इति वा असावहमिति वा प्रच्युता-णुभावस्सन् प्राप्तोन्मनीमहाप्राणनादभावो वा सन् वागर्थरूपिण्यास्तवापि पूज्य एवेत्यर्थः ॥३९-६१॥

एवमुक्तवागर्थसामरस्यवर्त्मना प्रच्युताणवविसर्गविलासभेदभावस्य प्रा-प्तशाक्तशाम्भवानुत्तरविसर्गविलासाऽभेदभावस्य च द्वादशान्तोन्मनीप्रकाशम-हाबिन्दुधामात्मकप्रकाशचक्रस्वाभाव्येनैवाभिन्नानन्दमूर्तिचक्रमयपुरुषोत्तमभा-वमपि द्योतयति—

तत्तादर्थमयभोग्य (ग) लक्षणा
नन्दमूर्तिरयमुत्तमः पुमान् ।
अर्पणेन जगताश्चिदम्बरे
भाति संहृतिमयश्शिवे स [तः] च ॥६२॥

तत्तदर्थेत्यादिना । अयं पूर्वश्लोकोक्तः अणवविसर्गस्साधकः । तत्त-दर्थमयभोग्यलक्षणानन्दमूर्तिः तं तदर्थं वाच्यलक्ष्यतात्पर्यादिरूपमर्थं अयं ते प्रतिपाद्यतासम्बन्धेन गच्छन्तीति तत्तादर्थमयाश्शब्दाः । तएव भोग्यव-

स्तूनि लक्षणं च यस्यानन्दस्य स तत्तदर्थमयभोग्यलक्षणानन्दः। स एव मूर्तिर्यस्य नादानन्दनिमग्नप्राणमयस्य स तत्तदर्थमयभोग्यलक्षणानन्दमूर्तिः। विद्यानन्दसाम्राज्ये तत्तदर्थबोधकशब्दानामेव विदुषां प्राकृतानां क्षुन्निवर्तकान्नादिभोग्यवस्तूनामिव यथाधिकारं भक्तिज्ञानवैराग्यहेतुत्वेनाभ्यन्तरतृप्तिहेतुत्वादानन्दमूर्तिलक्षणत्वमिति भावः। तदुक्तं श्रीमद्भागवते ऐकादशस्कंधे- "भक्तिः परेशानुभवो विरक्तिरन्यत्र चैषत्रिककाल एकः। प्रपद्यमानस्य यथाश्नतः स्यात्तुष्टिः पुष्टिः क्षुदपायोनुघासम्" इति। श्रुतिरपि वाजपेयप्रकरणे- "वाग्वै देवतानां पुरान्नमासीत्" इति। तत्तदर्थमयभोगलक्षणेति पाठे-- तत्तदभिधयार्थमयं त्रिचतुर्वर्गपुरुषार्थमयं च भोगं लक्षयतीति तत्तदर्थमयभोगलक्षणः। सचासावानन्दः तस्य मूर्तिः स एव वा मूर्तिर्यस्य सः। तत्तदर्थमयभोगलक्षणानन्दमूर्तिरित्यर्थः। अतएव उत्तमः वागर्थातीताक्षरप्रकाशनादपरत्वेन उद्गततमस्कः। विश्वोत्तीर्णनादमयत्वादिति भावः। अतएव पुमान् विश्वोत्तीर्णत्वेनैव पुरुषोत्तमश्चेत्यर्थः। तदुक्तं गीतासु भगवतापि

"क्षरस्सर्वाणि भूतानि कूटस्थोक्षर उच्यते। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः। यस्मा त्क्षरमतीतोहमक्षरादपि चोत्तमः। अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तमः। इति। ऐतेनात्मनो विषयानन्दबोधकवागर्थहेतून्मनीमहानादलक्षणस्यैवानन्दमूर्तित्वे तस्य भोक्त्रहंकारसाक्षित्वस्याप्युक्तप्रायत्वादाविद्यकग्रंथिभेदो व्याख्यातः। तत्प्रकारस्तु वेदांतपंचपश्यां प्रत्यक्तत्वविवेके। "अहंकारचिदात्मनावेकीकृत्या विवेकतः। इदं मे स्यदिदं मे स्यादितीच्छा कामशब्दिताः। अप्रवेश्य चिदात्मानं पृथक्पश्यन्नहंकृतिं। इच्छंस्तु कोटिवस्तूनि न बाधोग्रंथिभेदतः इति। हेशिवे! विपरीतेच्छारूपे! हेअम्ब! ततः उक्तलक्षणविषयभोगाद्धेतोः। जगतः पूर्वोक्तगतिमत्प्राणलक्षणस्य जीवस्य। चिदम्बरे चिन्मयाकाशे अर्पणेन संहृतिमयः संहृतिं संहारं अयते प्राप्नोति प्रापयति चेति संहृतिमयः। स्वयमेव संहारक्रियामयः चित्तप्रलयशाम्भवविसर्गविलासात्मना स्वात्मोपसंहर्ता सृष्टिकृत्यकारी वा चित्तप्रबोधशाक्तविसर्गविलासात्मना भवतीत्यर्थः।

जागतजडाजडवस्तूनां प्रलयकालिकभूताकाशविलय इव चिद्भोग्यवस्तूनां भोगकालिकदहराकाशविलयइति नादोपास्तिविद्यारहस्यमितिभावः। तत्रेतिपाठे तव चिदम्बरे त्वदभिन्नचिन्मयाकाशे संहृतिमयानन्दमूर्त्यन्यतररूपो भातीत्यन्वयः ॥४०-६२॥

नन्वेवंविधनादोपास्तिबलेनावासनादानन्दमूर्तिलक्षणशरीरकस्य पुरुषधौरेयस्य शारीरकवासनास्वप्रवृत्तेर्वागर्थमयशिवसंसारोपि लुप्यतेत्याशङ्क्य न कुलीशपाशुपतादिशैवतन्त्रमर्यादया मातृकावर्गाष्टकाभेदकल्पितवागर्थपुर्यष्टकलैङ्गिकवासनामयं वागर्थव्यवहारं दर्शयन्विश्वमयविश्वोत्तीर्णजीवदेवपशुभावभेदमपि दर्शयति—

अष्टधा स्फुरति या पुरी शिवे!
सूक्ष्मभावमुपगम्य लैङ्गिकम् ।
तज्जपौष्ट] तज्जुषोष्ट] कृतचिरवृत्तयो
वासना [स्त्व] स्त] वुरसि) स्त्वदुदर]स्थित पशौ ॥६३॥

अष्टधेति। हेशिवे इति सम्बुद्धिः। सप्तमी वा कार्यशिवाधिकरणविवक्षया। लैङ्गिकं सूक्ष्मभावं। एकत्र पृथिव्यादिपञ्चभूतस्थूललिङ्गभावेन अग्निसूर्यसोममण्डलत्रयस्थूलभावेन च कल्पितं तदीयगन्धादिपञ्चतन्मात्ररूपं चित्प्राणदेहरूपं च। अन्यत्र "चितिश्चित्तं च चैत्यं च चेतनाद्वयमेव च। जीवः प्राणः शरीरं च पुर्यष्टकमुदाहृतम्॥" तथा "वागादिपञ्च श्रवणादि पञ्च प्राणादि पञ्चाभ्रमुखानि पञ्च। बुद्ध्याद्यविद्यापि च कामकर्मणी पुर्यष्टकं सूक्ष्मशरीरमाहुः" इत्युक्तलक्षणं च सूक्ष्मभावं। अतएव—"अष्टाचक्रा नवद्वारा। देवानां पूरयोध्या। तस्यां हिरण्मयः कोशः। स्वर्गो लोको ज्योतिषा वृतः। योवै तां ब्रह्मणो वेद। अमृतेनावृतां पुरीं। तस्मै ब्रह्म च ब्रह्मा च। आयुः कीर्तिं प्रजां ददुः" इति श्रुत्युक्तं जगत्कारणं च लैङ्गिकम्। लीयते विश्वमयी बाह्यप्रकृतिः गम्यते चाध्यात्मिकी वागर्थमयी अत्रेति लिङ्गम्। तदीयलैङ्गिकं सूक्ष्मभावं उपगम्य या पुरी अर्थमयी शब्दमयी नादब्रह्ममयी च क्रमेण स्थूलसूक्ष्मकारणोपाधित्रिरस-

मष्टिरूपा अष्टधा स्फुरति । अत एवोक्तमनेनैव कविना शाकुन्तलनाटकीयनान्दीप्रस्तावे सूक्ष्मभावेनाष्टमूर्तीनामपि प्रत्यक्षत्वम् "या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हवि र्याच होत्री ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् । यामाहुस्सर्वभूतप्रकृतिरिति यया प्राणिनः प्राणवन्तः प्रत्यक्षाभिः प्रसन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥" इति । तज्जपौष्टकृतचित्तवृत्तयः । तज्जपे शाब्दवर्णक्रमे । तेषां अष्टमूर्तिबोधकमातृकावर्गाष्टकवर्णानां जपे ओष्ठकृताः ओष्ठचालनशिक्षिताः चित्तवृत्तयः यासु वासनासु तास्तथोक्ताः । आर्थिकवागर्थक्रमे तु । तज्जं अष्टधा स्फुरितप्राणमनोविज्ञानमूर्तिमयत्रिवृत्त्रैवर्णिकसूक्ष्मपुरीजन्यम् । यत्पौष्टं पुष्टिभावः तावन्मात्रपोषकं कर्म वा । तज्जपौष्टं । तत्कृताः तावन्मात्रशिक्षिताः चित्तवृत्तयो यासु तास्तथोक्ताश्च । तज्जुषोष्टकृतचित्तवृत्तय इति पाठे- तामष्टवर्गमातृकां सूक्ष्मपुरीं च जुषन्ति प्रीणयन्तीति तज्जुषः । अष्ट अष्टसङ्ख्याकाः "घृणा शङ्का भयं लज्जा जुगुप्सा चेति पञ्चमी । कुलं जातिश्च शीलं चेत्यष्टौ पाशाः प्रकीर्तिताः" इत्युक्तलक्षणपशुपाशरूपाः । कृतचित्तवृत्तयः । बहुभ्यो जन्मभ्यः जन्मनः प्रभृति वा शिक्षितचित्तवृत्तय इत्यर्थः । वासनाः वसत्यासु प्रत्यगात्मा वास्यते चेति व्युत्पत्तिभेदेन आधिकारिकमनोवासनाः । तदुरसि पूर्वोक्तपुर्यष्टकोरसि । स्थिते पशौ भवन्तीति शेषः । विश्वमयएव जीवे पाशव्यो वासना भवन्ति । ननु विश्वोत्तीर्णे इति भावः । त्वदुरसि स्थिते' त्वदुदरस्थिते पशौ । इति पाठद्वयेपि उक्तपुर्यष्टकरूपिण्याः प्रकृतेस्तव वाङ्मये उरसि अर्थमये उदरे वा यज्ञवेदीवास्तुमण्डपात्मिके स्थिते पशावेव भवन्ति । ननु विश्वोत्तीर्णस्वभावे परशिवे इत्यर्थः । देहेन्द्रियपोषणमात्रपर्यवसन्नचित्तवृत्तय एव पशुवासनारूपेण रूढमूला भवन्तीति फलितोर्थः । अतएव पशुलक्षणमुक्तं तन्त्रान्तरे- शब्दराशिसमुत्थस्य शक्तिवर्गस्य भोग्यताम् । कलाविलुप्तविभवो गतस्सन् स पशुः स्मृतः" इति । तत्त्वप्रकाशेपि "पशवस्त्रिविधाः प्रोक्ता विज्ञानप्रलयकेवलौ सकलः । मलयुक्तस्तत्राद्यो मलकर्मयुक्तो द्वितीयः स्यात् ॥

मलमायाकर्मयुतस्सकलस्तेषु द्विधा भवेदाद्यः । आद्यस्समाप्तकलुषोऽसमाप्तकलुषो द्वितीयः स्यात् ॥२॥ आद्यानुगृह्य शिवो विद्येशत्वे नियोजयत्यष्टौ। मन्त्रांश्च करोत्यपरां स्तेचोक्ताः कोटयस्सप्त ॥३॥ इत्यादिना सप्तकोटिमहामन्त्रशरीरत्वे सिद्धेप्याधिकारिकं पशुत्वमप्यनिवार्यमिति दर्शितं तत्रैव । अनेनैवाभिसन्धिना श्रुतावपि चतुर्दशस्वराभिन्नचतुर्दशसंख्याकविद्याभुवनादीनामपि छन्दःपादाक्षरवृत्तादिवागर्थनियमबद्धशब्दस्पर्शाद्यपञ्चीकृतवागर्थशरीरिणामपि विद्यामन्त्रादिवागर्थशब्दाभिमानिनामाजानदेवानां पंचीकृतपाञ्चभौतिकशरीराभिमानिनामिव ग्राम्यारण्यपशुजातिभेदेन विभिन्नसप्तसप्तसंख्याकपशुजातिमत्त्वं "सप्त ग्राम्याः पशवस्सप्तारण्यास्सप्त छन्दांसि" तथा-- "ये ग्राम्याः पशवो विश्वरूपाः । य आरण्याः पशवो विश्वरूपाः" तथा ओषधिजातिमत्त्वं च "सप्त ग्राम्या ओषधयस्सप्तारण्यास्सप्त छन्दांसि" इत्यादिवाक्यैः तैत्तिरीयसंहितायां तृतीयकाण्डप्रथमप्रपाठकचतुर्थानुवाकादिषु नवमानुवाके च मानवनाभानेदिष्टचरित्रव्याजेन तैत्तिरीयारण्यकाण्डे च तत्तद्वाक्यैश्श्रूयते अतएव भविष्योत्तरपुराणतुर्यखण्डैकोनविंशाध्यायत्रिपञ्चाशत्श्लोकमारभ्य महाधिकारिकमपि पशुत्वमालभ्यत्वेन कण्ठत एवोद्घोषितम् । यथा "यस्य बुद्धिस्स वै ब्रह्माऽहङ्कारो यस्य वै शिवः" इत्यादिना यज्ञपुरुषस्यापि पशुत्वं व्यवस्थाप्य "हिंसायज्ञैश्च भगवांस्स वै तृप्तिमवाप्नुयात् । स चेद्यज्ञपशुर्वह्नौ ब्रह्मभूयाय कल्पते" इत्यादिना तस्याप्यालभ्यत्वेन ब्रह्मभूयत्ववर्णनात् । ईदृशमहाधिकारिकस्यापि यज्ञपशुत्वेनालभ्यत्वं नाम । आचार्यमूर्तिस्थशक्तिपातापरपर्यायदीक्षासंस्कारेण । तथा "जननं जीवनं चैव ताडनं बोधनं तथा । अभिषेकोऽथविमलीकरणाप्यायने पुनः ॥ तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रियाः ।" इत्यादिना शारदातिलकाद्युक्तमन्त्रसंस्कारैश्च संस्कार्यत्वं तान्त्रिकम् । उक्तं च शैवागमे "परिपक्वमलानेतानुत्सादनहेतुशक्तिपातेन । यो जयति परे तत्त्वे स दीक्षयाचार्यमूर्तिस्थः" इति । तथा "पूर्वं व्युत्पसितस्याणोः पाशजालं व्यपोहति । मन्त्रस्य मन्त्रिणो वापि दीक्षा सिद्धिप्रदा भवेत् ॥ पृथङ्मन्त्रः पृथङ्मन्त्री न सि-

हृष्यति कदाचन। उच्चार्यमाणा ये मन्त्रा न मन्त्रांश्चापि तान्विदुः॥ मोहिता देवगन्धर्वा मिथ्याऽज्ञानेन गर्विताः। पुंड्रक्षोरिव मन्त्रस्य माधुर्ये हृदयस्पृशि॥ ऋजीषमानने तिष्ठत्यक्षरोच्चारलक्षणम्" इत्यादिना तन्त्रालोकादिषु तदीयविस्तरोपि स्फुटमुपलभ्यते। अथ वैदिकं तु वेदान्तपञ्चदश्यां चित्रदीपे बुद्धिवृत्तिप्रतिविम्बितचिदाभासरूपेण वर्तमानकृतेर्जीवस्य वासनाप्रतिविम्बितचिन्मयशरीरेणेश्वरत्वापादनपर्यन्तं स्वस्वरूपभिन्नधर्मधर्मिपशुभावभेददर्शनस्यैव विविच्य दर्शितत्वेन तस्यवक्ष्यमाणप्रकारेण बिम्बप्रतिबिम्बात्मके स्वस्वरूपे धर्मधर्मिभेदस्याप्याभासीकरणमेव स्वस्वरूपतत्त्वसाक्षात्कारकृतमिति संक्षेपः ॥४१-६३॥

एवमुक्तप्रकारेण नादनवकवागर्थषडध्वमार्गभेदेन शैवजैवपाशुकसंसारेष्वन्योन्यभक्ष्यभक्षकयोस्सृष्टिसंहारक्रियामयशरीरयोः पूर्वोक्तदीक्षामन्त्रसंस्कारादिभिस्सिद्धमन्त्रमन्त्रितादात्म्याभेदान्यतरभावयोः स्रष्टृतिरोधातृकार्यमयशरीरयोर्वान्तराले अन्तस्साक्षिभास्यत्वेन बहिरिन्द्रियवेद्यत्वेन वा अनुभूतशाक्तशाम्भवान्यतरउन्मनीनादनवकानन्दमूर्तेर्जीवसंसारभाजोपि विश्रान्तिलक्षणाणवविसर्गपुरुषधौरेयस्य स्वस्वरूप एव कृत्यपञ्चकक्षमं, पूर्वोक्तलैङ्गिकं धीमनोक्षमयं सूक्ष्मशरीरमुन्मनीनादनवकरूपिण्या त्वयैव प्रसादीक्रियत इत्याह—

सर्गसं [हृ] वृ) ति शरीरयोर्द्वयो
भक्ष्यभक्षकपदस्थयोस्तयोः।
अन्तरे (द) व) महमास्थितश्शिवे!
धीमनोक्षवपुरर्पितं त्वया ॥६४॥

सर्गसंहृतीत्यादिना। हेशिव इति सम्बुद्धिः। अविद्यानिकेतपदस्थितजीवशिवविवक्षया अधिकरणसप्तमी वा। सर्गसंहृतिशरीरयोः सर्गशरीरं चित्तप्रवोधलक्षणशाक्तविसर्गात्मकं जीवशरीरं। संहृतिशरीरं चित्तप्रलयलक्षणशाम्भवविसर्गात्मकम्। सर्गसंवृतिशरीरयोरिति पाठे-- चित्तप्रबोधप्रल-

यान्यतरस्रष्टृवागर्थसर्गशरीरम् । संवृतिशरीरं तु चित्तविश्रान्तिलक्षणाणवविसर्गमयम् । सृष्टिसंहारान्यतरतादात्म्येनोभयतादात्म्येन वा स्वरूपतिरोधानेनाविधकानिकेतान्यतरस्थितिलक्षणेन स्वस्वरूपावरकं च । तयोः सर्गसं(ह्व(वृ)तिशरीरयोः । अतएव भक्ष्यभक्षकपदस्थयोः । पूर्वश्लोकोक्तपशुपाशाष्टकभक्ष्यभक्षकपदे तद्भावे वा तिष्ठतोः । आणवविसर्गापन्नशाक्तशाम्भवविसर्गयोर्यावत्पूर्णभावमर्थानुस्वारात्मकयोरन्यान्यभक्ष्यभक्षकपदस्थितेर्वागर्थमर्यादायामपि समत्वादिति भावः । तदेतत्सर्वं "कुण्डह्वत्स्वरचतुष्टये स्थितो व्यक्तितः प्रभृति यो जगत्क्रमः" इत्यत्र तृतीये विमर्शे स्फुटमुपपादयिष्यत इतीह विरम्यते । द्वयोः वागर्थरूपयोः । अन्तरा अन्तराले । इदं पूर्वश्लोकोक्तं त्वदूरोरूपं त्वदुदररूपं वा अनुत्तराकारनादमयं वक्ष्यमाणलक्षणप्रमाणाहमक्षरूपं महास्थितिपदं वर्तमानं । अहं आस्थितः । पूर्वोक्तजीवेशान्यतरपाशुकभेदभावेनेति भावः । यद्वा पूर्वश्लोकोक्तं त्वदुरस्त्वदुदरं वा अहमेवेत्यभेदात्मना साक्षित्वेनास्थित इति वा भावः । त्वया उन्मनीनादवागर्थषडध्वप्रकृत्या धीमनोक्षवपुः आर्पितं । भेदवासनया त्वदुरस्युदरे वा स्थितयोः पशुपशुपत्योः सममेवार्पितमिति न तवास्ति पक्षपात इति भावः ॥४२-६४॥

एवं पाशुपतादिशैवशाक्ततन्त्रागममर्यादयापि विद्याऽविद्याभुवनमयविश्वोत्तीर्णस्य तदीयकर्मज्ञानेन्द्रियचक्रयोश्च क्रियाज्ञानमयसर्वयज्ञक्रत्वर्थत्वेन क्षराक्षरतत्त्वात्मकयोः "अपशवो वा अन्यगो अश्वेभ्यः" इति तैत्तिरीयसंहितायां पञ्चमकाण्डद्वितीयप्रपाठके नवमानुवाके आग्निककाण्डोक्तवैदिकप्रशस्तपशुत्वनिर्वाहपूर्वकं पुरुषोत्तमस्य पशुपतेरात्मनश्चक्रराजसंज्ञामिन्द्रियादिपरिवारस्य द्वादशराजमण्डलस्येव राजपुत्रसंज्ञां च निर्वहन् तदुभयसामरस्येन वक्ष्यमाणप्रकाशानन्दमूर्तिमयसमष्टिबृन्दचक्रराजवर्णनाय बीजमावपति—

राजनात्प्रकृतिरञ्जनाच्च मां
　　राजसंज्ञमनुबोधकर्मणोः ।
यद्त्वया पृथगमी प्रवर्तकाः
　　पुत्रभावम(धि (पि) रोपिताश्शिवे ॥६५॥

राजनादित्यादिना। हे शिवे! इति चित्तसम्बोधलक्षणशाक्तानुत्तरविसर्गचिन्मयजीवप्रकृतिविवक्षया सम्बुद्धिः। चित्तविश्रान्तिलक्षणाणवानुत्तरविसर्गजडजीवमयजगदधिकरणविवक्षया, चित्तप्रलयलक्षणशाम्भवानुत्तरविसर्गपरशिवस्वरूपविषयविवक्षया वा सप्तमी वा। राजनात् 'राजृ रञ्जनदीप्त्योः' इतिधातोः पूर्वोक्तोन्मनीनादापरपर्यायमुख्यप्राणस्वरूपे स्वयंप्रकाशनात्। तथा प्रकृतिरञ्जनाच्च प्रकृतेः वागर्थरूपिण्या नादप्रकृतेः रञ्जनाच्च। त्रयीप्रभृतिचतुर्दशपर्यंतविद्याभुवनादित्रागर्थसृष्टौ माहेश्वरमातृकासूत्रद्वारेणेति भावः। राजसंज्ञं– राजेति संज्ञा यस्य तं तथोक्तम्। तथाचोक्तं परिमलेऽपि "जगतो रञ्जनाद्राजा साक्षाद्देवो महेश्वरः" इति। मां वागर्थत्रिपुटीत्रिवृत्प्राणरूपमात्मानं। अनु अनुसृत्य। बोधकर्मणोः पूर्वोक्तसांख्ययोगमार्गरूपयोः ज्ञानकर्मणोर्विषये। पृथक्प्रवर्तकाः "देशकालकलनाविशेषतो यद्भवानिविहितं निगद्यते (निषिध्यते)" इति पूर्वोक्ताध्यारोपापवादापरपर्यायप्रवृत्तिनिवृत्तिमार्गभेदेन विरुद्धमार्गभेदेनेव प्रवर्तकत्वात्पृथक्प्रवर्तकत्वमिति भावः। षट् अमी क्रमेण मनस्सहितज्ञानेन्द्रियषट्करूपाः नादस्वरूपज्ञाने ज्ञानात्मनः प्रवर्तका निवर्तकाश्च क्रियात्मनः। तथा बुद्धिसहितकर्मेन्द्रियषट्करूपाः। वागर्थजननादिकृत्यपञ्चकात्मके कर्मणि विषयेच क्रियात्मनः प्रवर्तकाः निवर्तकाश्च ज्ञानात्मनः। एवंपृथक्प्रवर्तकाः पुत्रभावं चाधिरोपिताः। मनस्सहितज्ञानेन्द्रियषट्कं ज्ञानमार्गपुत्रभावं बुद्धिसहितकर्मेन्द्रियषट्कम्। कर्ममार्गपुत्रभावं चाधिष्ठापिता इत्यर्थः। अपि रोपिता इति पाठे– न केवलं "ब्रह्मणः प्रभृतिसिद्धपञ्चकम्" इति श्लोकोक्तसिद्धब्रह्मशक्तिपञ्चकद्वयाभिन्नोन्मनीनादाकृतिभावं नापि पूर्वश्लोकोक्तपशुपशुपतिभावं किन्तु राजपुत्रभावमपि रोपिताः प्रापिता इत्यर्थः। यथा लोके प्राकृतसाम्राज्ये यौवराज्यपदमधिष्ठापिताः पालयन्ति, तथा आत्मसाम्राज्येपि पुंनामनरकत्रातृत्वेनाध्यात्मपदं पालयितुं पूर्वश्लोकोक्तपशुभावादुद्धृत्य पुत्रभावं प्रापिता इति भावः। शाक्तानुत्तरविसर्गवागर्थनादप्रकृतिरूपिण्या त्वयैवेति शेषः। उक्तं च महार्थमञ्जरीपरिमलेपीममेव श्लोकमुदाहृत्य-- "जगतो रञ्जनाद्राजा साक्षाद्देवो महेश्वरः। तत्पुत्रा राजपुत्राः स्युरिन्द्रियाणि

षडेव हि" तत्र साधिकाराः बुद्धिसहितकर्मेन्द्रियाणि निरधिकाराः मन-स्सहितज्ञानेन्द्रियाणि च इति। साधिकारत्वं कर्मकर्तृत्वरूपं निरधिकार-त्वमकर्तृत्वमिति तदर्थः। कामन्दकीयादिषु वैषयिकार्थशास्त्रेष्वपि तदा-द्वीयगूढाभिसन्धिः। यथा "विषयानन्तरो राजा शत्रुर्मित्रमतःपरम्। अरि-र्मित्रमरेर्मित्रं मित्रमित्रमतःपरम्। अथारिमित्रमित्रं च विजिगीषोः पुरस्सराः। इत्यादि तत्रैव द्रष्टव्यम्। शारीरकब्रह्मसूत्रभाष्येपि ४ अ॥ ४ पा॥ १७सू॥ "जगद्व्यापारवर्जं प्रकरणात्" इत्येतत्सूत्रभाष्यावसरे जगच्छब्दस्य रूढ्यर्थ-स्वीकारेण जडजगत्सृष्ट्यादिकृत्यपञ्चकबाह्यव्यापारसम्बन्ध एव मुक्तानां नि-राकृतः। नत्वाभ्यन्तरवागर्थकृत्यपञ्चकविद्यामयः। अन्यथा तत्रैव "सङ्क-ल्पादेवास्य पितरस्समुपतिष्ठन्ते" इत्याद्युत्तरग्रन्थविरोधात्। एतेनात्र प्रा-चीनावपि स्मार्तसांख्ययोगमार्गत्वेन प्रसिद्धौ कापिलसांख्यहठयोगादिबाह्य-विद्यामार्गौपयिकौ पारमर्षावपि वैदिकक्रियामात्रोपकारकौ यौगिकार्थतत्परा-वेव। अर्वाचीनौ तु दयानन्दादिपुरुषकल्पितौ वैदिकच्छायानुकारिणौ चार्यस-माजादिसमजसंज्ञान्तरव्यवहृतौ पांचभौतिकबाह्यप्रकृतिमात्रेष्यविश्रान्तौ आ-ध्यात्मिकराजविद्याराजगुह्ययोगापरनामकवैदिकविद्याराजमार्गविरुद्धत्वेनावैदि-काविति प्रत्युक्तौ वेदितव्यौ। वैदिकविद्याराजमार्गे "गुरुशिष्यभावात्मक-ब्रह्मभावस्य त्रयीमात्रप्रमेयस्य, राजप्रकृत्यात्मकक्षत्रभावस्य षडङ्गषडध्वमात्र-प्रमेयस्य, पशुपशुपत्यात्मकवैश्यभावस्य तन्त्रागमादिविद्यान्तरप्रमेयस्य, सेव्य-सेवकमूर्तिमयशूद्रभावस्य भाषामयप्रबन्धप्रमेयस्य च। एवं चतुर्विधवागर्थ-प्रमेयस्याप्यात्ममात्रविश्रान्तत्वयुक्त्या वैदिकशब्दानां "योगाद्रूढिर्बलीयसी" इति लौकिकन्यायेन रूढ्यर्थस्वीकारस्य "जन्मना जायते शूद्रः कर्मणा जायते द्विजः" इत्युक्तशूद्रभावप्रभृतिककर्ममार्गोपकारकत्वप्रणाल्या वैदिक-ब्रह्मभावपर्यन्तमारादुपकारकत्वविवक्षया शिष्यौघानुग्रहार्थकल्पितत्वेन विद्या-सन्तानाभिवर्धकतया द्वादशान्तनादकल्पे महोन्मनीबिन्दुशरीरे रूढिप्रदर्श-नार्थत्वात्। एतदेवाभिप्रेत्योक्तमभियुक्तैर्लौकिकगुरुशिष्यलक्षणं लक्षीकृत्य "अध्याप्स्यन्ति यदि दर्शयितुं क्षमन्ते (वेदोक्त (नादान्त) कर्मगुरवो गुरव

स्त एव । शिष्यास्त एव र(च(स) यन्ति पुरो गुरूणा मन्ये पुनस्तदुभया-भिनयं भजन्ते" इति । एतदेव भिन्नसम्प्रदायद्वयप्रवर्तकगुर्वोघत्रिकद्वयमपि-ज्ञानार्णवोक्तपुष्पसङ्कोचक्रमसूचनपूर्वकमनुपदमेवोपरिष्टात्तनश्लोकद्वयेपि व-र्णयति च ॥४३-६०॥

एवं मनोबुद्धिसहितज्ञानकर्मेन्द्रियषट्कयोः प्राकृताप्राकृनस्वरवर्णात्मक-वैदिकसांख्ययोगपरामर्शवर्त्मनोः प्रसरणप्रतिसंचरणसम्प्रदायप्रवर्तकपरौघ-महौघदिव्यसिद्धमानवशिष्यौघाद्ययगुरुषट्कमिथुनरूपत्वेनात्मनः कालीकाल-परशिवमिथुनात्मकत्रयोदशरश्मिरूपतया च वक्ष्यमाणपञ्चवाहमहार्थक्रमरूप-वृन्दचक्रस्य बीजमुपन्यस्य तमेवं बीजं "ब्रह्मणः प्रभृतिसिद्धपञ्चकम्" इति पूर्वमुक्तनादनवकस्य ज्ञानार्णवोक्तगुरुपुष्पसङ्कोचक्रमोपयोगिद्वादशान्तमहाबि-न्दुविश्रान्त्या द्वादशादित्यमयात्मसम्पद्विस्मृत्याद्ययनष्टसन्ततित्वदेषराहि-त्येन वागर्थमयशिवसंसारवृक्षमूलतया निरूपयिष्यन् तत्र प्राणापानसूर्यच-न्द्रयोरूर्ध्वाधोवहनक्रमविपर्ययेण वह्निबिन्दुमयनादमूर्तिचक्रंपि अग्नीषोमक-लाविपर्ययं च सूचयन्नग्नीषोमनादमूर्तिमयप्रकाशचक्रस्य सिद्धौघगुरुमण्ड-लात्मतां विवृणोति—

> **और्ध्ववाह्मयबिन्दुलक्षणं**
> **प्राणसूर्य इह चिद्विषट्कलः ।**
> **तत्कलाधरतनोर्गुरुक्रमे**
> **त्वं प्रकाशतनु (सिद्ध (सिद्धि) मण्डलम्** ॥६६॥

और्ध्ववाहेत्यादिना श्लोकद्वयेन । और्ध्ववाहमयबिन्दुलक्षणं स्वरवर्ण-नादक्रमे । पूर्वं "सप्तधा वमसि या त्वमीश्वरी" इति श्लोकसूचितसप्तस्रोत-स्सन्निधिसप्तस्वरवर्णबोधक 'अ इ उण्' इत्यादिमाहेश्वरसूत्रत्रयमूलाग्निसूर्य-सोमबिन्दवः, यद्वा तुरीयविमर्शान्ते वक्ष्यमाणकालेयद्वयोर्योगसम्बोधनपर्य-न्ततया कादिपावसानकस्पर्शवर्गवर्णाक्षरसमाम्नायसङ्केतिन 'कपय्' इति प्रयु-क्तद्वादशान्ताक्षरसमाम्नायमूलभूता वा ऊर्ध्ववाहमयाबिन्दवः उच्यन्ते । तान् लक्षयतीति ऊर्ध्ववाहमयबिन्दुलक्षणः । प्राणसूर्यः । तदीयनादमूर्तिमयं

चक्रं और्ध्ववाहमयबिन्दुलक्षणम् । यद्वा, "गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः" इत्युक्ताग्निसूर्यसोमधामगतिभेदानां प्राणव्यानापानवृत्तित्रयाभिन्नऊर्ध्वतिर्यगधस्स्रोतस्त्रयात्मकत्वेन तदीयोर्ध्वस्रोतःप्राणवृत्तिमयो वह्निबिन्दुः । तल्लक्षणनादमयं मूर्तिचक्रमिति वा । इह राजने प्रकृतिरञ्जने वा । चिद्द्विषट्कलः पूर्वोक्तचिन्मयज्ञानकर्मेन्द्रियषट्कद्वयं चिद्द्विषट्कं । तल्लाति गृह्णातीति चिद्द्विषट्कलः प्राणसूर्यः । और्ध्ववाहप्राणबिन्दुकमग्निमूर्तिचक्रं प्रकाशचक्रमयः प्राणसूर्य एवेत्यर्थः । तत्कलाधरतनोः तत्कलः तयोरग्निसूर्ययोः कलाः धरति क्रमेण शुक्लपक्षे तनोति विस्तारयति च पूर्णिमापर्यन्तं पश्चात्क्रमेण तनोति क्षीणयति च कृष्णपक्ष इति तत्कलाधरतनुः । पूर्वं "षण्डवर्जमहिमद्युतेः कलाः । इत्यधस्तात्तनश्लोके षोडशस्वराणां चन्द्रकलात्वेनैव वर्णनाद्व्यावहारिकः पूर्णचन्द्रः तस्य तत्कलाधरतनोः । व्यावहारिकचन्द्रस्य । यद्वा, तत्कलाधरश्चन्द्रः स एव तनुश्शरीरं यस्यास्तव इति वा । गुरुक्रमे - तत्कलाधरतनोरित्यत्र अकारप्रश्लेषेण अधरतनोः अधरयसि व्यवहारचन्द्रं सूर्यात्मना अविद्यारात्रितुल्ये दर्शे तनोषि क्षीणयसि कृष्णप्रतिपत्तिथिमारभ्य यावत् शुक्लप्रतिपदं "प्रथमां पिबते वह्निः द्वितीयां पिबते रविः" इत्यादिस्मरणादिति भावः । तदादि पूर्णिमापर्यन्तं विस्तारयसि चेत्यधरतनोस्तव । गुरुक्रमे च पूर्वोक्तत्वदीयसांख्ययोगमार्गद्वयप्रवर्तकगुरुक्रमे विषये इत्यर्थः । तत्कला तयोरग्निसूर्ययोर्मूर्तिकला तत्कलैव । "अग्निं वा वादित्यस्सायं प्रविशति । उद्यन्तं वा आदित्यमग्निरनुसमारोहति" इति श्रुतेः । रघुवंशकाव्ये अनेनैव कविना रघुराज्यवर्णनावसरे "स राज्यं गुरुणा दत्तं प्रतिपद्याधिकं बभौ । दिनान्ते निहितं तेजस्सवित्रेव हुताशनः" इत्युक्तेश्च अग्निसूर्यमूर्तिकलाया एकत्वस्यापि शास्त्रानुभवसिद्धत्वात्तयोरेकैव मूर्तिकला । तदीयमूर्तिकलारूपिणी त्वम् । प्रकाशतनुसिद्धमण्डलं - स्वयंप्रकाशते च प्रथमं मण्डलत्रयाभिन्नोपाधित्रयेण, तन्यते विस्तार्यते स्वस्वरूपमेव षड्व्याभिन्नषड्भावविकारात्मना, क्षीयते वा पश्चात् सिद्ध्यति च कालक्रमेण दीप्यमानसिद्धमण्डलात्मना इति प्रकाशतनुसिद्धमण्डलं स्वर-

सीति शेषः । सिद्धिमण्डलमिति पाठे— प्रकाशतनु प्रकाशचक्ररूपं सिद्धिमण्डलम् । अणिमासिद्ध्यादिसर्वत्रिखण्डामुद्राशक्तिपर्यन्तत्रैलोक्यमोहनाख्यभानुमण्डलस्य प्रकाशचक्ररूपतया प्रथमप्रपूज्यं तत्त्वमेव भवसीत्यर्थः । एतेनात्र मण्डलत्रयात्मके स्रोतस्त्रये, वक्ष्यमाणाधोवहननादलक्षणापाननादमये वा स्रोतसि । यथेच्छं त्रिवृद्वाङ्मयाग्नेर्बिन्दुरूपत्वं, त्रिवृत्प्राणमयसूर्यस्य द्वादशान्तपर्यन्तनादात्मकत्वं, देहमयप्रकाशशिवचन्द्रस्य तदुभयकलाधरत्वं चेत्यपीति सिद्धम् । तेन सादाख्यषोडशीकलात्मकपुरुषचन्द्रस्य सप्तसंख्याकपूर्वोक्तसप्तस्रोतोमयसूर्यकुटुम्बादिसकलखगोलाधारकत्वेन शिवशक्तिसदाशिवादिकलान्तम् "सप्तधा वमसि" इति पूर्वोक्ततत्त्वसप्तकत्वामेशीकालीशब्दार्थकालप्रभृतिरूपत्वं, कश्यपनामकाष्टमसूर्यस्य कालसूर्यात्मकतया परशिवकालरूपत्वं च यदरुणप्रपाठकेऽपि तैत्तिरीयारण्यककाण्डे समाम्नातम् । यथा- "यत्ते शिल्पं कश्यप रोचनावत् । इन्द्रियावत्पुष्कलं चित्रभानु । यस्मिन्त्सूर्या अर्पितास्सप्तसाकम् । तस्मिन्राजानमधिविश्रयेममिति । ते अस्मै सर्वे कश्यपात् ज्योतिर्लभन्ते । तांत्सोमः कश्यपादधिनिर्धमति । भ्रस्ताकर्मकृदिवैवं" इति तत्रैव तदीयाणवविसर्गलक्षणप्रकाशचन्द्रजीवशिवात्मना सप्तसंख्यकसूर्यगोलेषु । भ्रस्ताकर्मकृदिवेति वाक्यशेषस्थसोमनाम्ना सप्तस्रोतोमयत्रिपुटीद्वयमध्यकेन्द्रस्थित्या विश्रान्तिप्रधानाणवविसर्गधर्मित्वम् । तथा "यस्मान्न जातः परो अन्यो अस्ति । य आविवेश भुवनानि विश्वा । प्रजापतिः प्रजया संविदानः । त्रीणि ज्योतींषि स च ते सषोडसी" इति षोडशीनामकसोमयागे तन्नामकग्रहाभेदेन षोडशीकलायाः श्रुतिशतैः प्राधान्यं च । तथा गीतासु विभूतियोगाध्याये "नक्षत्राणामहं शशी" इति प्राजापत्याभिजिन्नक्षत्रात्मकत्वं चाभिहितम् । तथा शाम्भवबिन्दोः आगमेषु कामकलास्वरूपभावनायां अग्नीषोमात्मकविसर्गबिन्दुद्वयस्य देवतास्थूलरूपे कुचद्वयत्वेन अनुस्वारात्मकमिश्रसूर्यबिन्दोर्मुखावयवत्वेन परशुरामकल्पसूत्रे "बिन्दुना मुखं बिन्दुद्वयेन कुचौ स परार्धेन योनिरिति कामकलां ध्यात्वा" इत्युक्तकामकलास्थूलरूपे परदेवताचिन्मयस्वरूपारम्भघाण्मुखशब्दप्रयोगेण

प्रकाशानन्दमूर्तिमयवागर्थचक्रत्रयोपासनायां वागर्थपूर्णानुस्वारबिन्द्वात्मना उ-
पासनामुखरूपत्वप्रतीतेः मूर्त्यानन्दचक्ररूपयोरग्नीषोमवागर्थविसर्गबिन्द्वोर्मध्ये-
पि सोमबिन्दोरानन्दचक्राभेदेन मध्यस्थितिः, मूर्तिचक्रमयस्याग्नेयबिन्दोः
सकलपाशत्रद्वैतसंसारमयमृत्युदाहकत्वेन विलयाधिष्ठानत्वाच्छाम्भवत्रिसर्गवि-
लासत्वेनान्ततोनिवेशश्च सिद्ध्यत इत्युपास्तिप्रकारभेदरहस्यप्रकाशनं सर्वतन्त्र-
सिद्धान्तप्रमेयमपि सूचितम् । अतएव सौन्दर्यलहर्यां श्रीशङ्करगुरुपादसार्व-
भौमप्रदर्शितं कामकलास्वरूपवर्णनमपि- "मुखं बिन्दुं कृत्वा कुचयुगमधस्त-
स्य तदधो हरार्धं ध्यायेथो हरमहिषि ते मन्मथकलाम्" इत्यधोवहननादल-
क्षणापानसोममयहरार्धकामकलास्वरूपोपासनायामपि मनोबुद्धियुतदशेन्द्रि-
याणां द्वादशसंख्यामात्रविश्रान्त्या आत्माऽत्मीयान्यतरकृत्यवासनालोपे का-
र्यवासनासन्ततिनाशेन नष्टसन्ततित्वमिव कालीकालयुगलात्मकबाह्यभौति-
ककालस्वरूपेपि चान्द्रसौरादिव्यावहारिककालमानसिद्धमाससंख्यायां "अ-
स्ति त्रयोदशो मास इत्याहुः" इत्यादिश्रुतिवाक्यैः लुप्ताधिकमासार्धमासति-
थ्यादिकालावयववासनालोपे "त्वन्मुखं त्रिपथनेत्रि भात्मकम्" इति पूर्वोक्त-
बहिर्जृम्भितचतुष्किकस्वरूपविज्ञानवासनानष्टसन्ततित्वस्यापि द्योतकमिति ।
धामसंविद्वर्णक्रमात्मकविश्वमयगुरुपुष्पसङ्कोचक्रमेपि द्वादशरश्मिसंख्यामात्र-
विश्रान्तौ ज्ञानार्णवे परशिवेन निषेधः कण्ठरवेणोक्तः । यथा ज्ञानार्णवे
षोडशे पटले- "रश्मिवृन्दं दलयुतं गुरुवस्तु दलाधिकाः । तस्मात्सङ्कोच-
येत्पुष्पममितास्सिद्धिहानिदाः ॥४७॥ नष्टसन्ततिविज्ञेया मितास्सर्वसमृद्धिदाः।
पुष्पसङ्कोचनं नोचेद्द्वादशे नष्टसन्ततिः ॥४८॥ सन्तत्या नष्टरूपस्सन्नभवे-
द्देवताप्रियः । अतएव मया पुष्पं सम्यक्सङ्कोचितं प्रिये॥४९॥" इत्यादिना
कामराजाख्यविद्यासम्प्रदायप्रवर्तकगुर्वौघत्रयपंक्तियजनं विधाय तामेव गुरुपं-
क्तिं परापरभेदेन विभज्य मानवौघान्ते "अपराः परमेशानि नियता अक्ष-
रा इमे । एतत्त्रयं तु नियतं देशिकानां हिताय च । मयोद्धृत्य महेशानि
पुष्पं संकुचितं प्रिये । मानवौघान्तिके पश्चात्स्वगुरुत्रितयं यजेत्" इत्या-
दिना यजनप्रकारभेदोपि विविच्य वर्णितः । तस्माद्धामसंविद्वर्णाद्यक्रमभे-

देन यथाधिकारमधिभूताधिदैवाध्यात्मपदेषु प्रकाशानन्दमूर्तिमयचक्रभावना भेदेन च वागर्थमयाक्षरतत्त्वानामेव उन्मनीप्राणनादस्वरूपाभेदसिद्धिपर्यन्तं गुरुपंक्तिरूपेणोपास्यतेत्युपासनारहस्ये गुरुपुष्पसङ्कोचक्रमः यथासम्प्रदायं गुरुमुखैकवेद्यश्च ॥४४-६६॥

एवमग्नीषोममूर्तिकलाभ्यां साकं द्वादशकलात्मकचिन्मयौर्ध्ववाहविन्दु-लक्षणं नादनवकसमष्टिमयमुख्यप्राणसूर्यं प्रकाशचक्रत्वेनोपवर्ण्य अधोवह-ननादलक्षणं मनोमयापानसोममण्डलं तद्भोग्यविग्रहत्वेन निर्दिशन् पूर्वोक्त-षोडशस्वराणां तदीयकलारूपत्ववर्णनेन तस्यानन्दचक्ररूपतां दर्शयति—

यस्त्वधोवहननादलक्षणा-
पानसोम इह भोग्यविग्रहः ।
तस्य षोडशकलाः कृता (स्त्व [त्य) या
नन्दचक्रतनवो गुरुक्रमे ॥६७॥

यस्त्वित्यादिना । इह राजनरञ्जनसामरस्यात्मके पूर्वोक्तसांख्यमार्गे योगमार्गे वा स्मार्ते । गुरुक्रमे विषये । यद्वा प्रकाशचक्रस्य पूर्वप्रकृतत्वेन तदीयपरौघमहौघदिव्यौघात्मकगुरुक्रमस्य पूर्वश्लोकविवक्षितत्वे इह सिद्धमा-नवशिष्यौघत्रयात्मकावशिष्टविमर्शौघत्रयात्मके गुरुक्रमे इति वा इहशब्दार्थः। यस्तु तुशब्दः पूर्ववैलक्षण्यबोधकः । पूर्वं प्रकाशचक्रे और्ध्ववाहमयविन्दु-लक्षणः प्राणसूर्यः । अत्र तु अधोवहननादलक्षण अपानसोमः । अनच-लने' इति धातोः पूर्वं प्रकृष्टचलनात्मको मुख्यात्मना । चलनस्य प्रकर्षो-नामाप्रच्युतस्वरूपतया स्वस्वरूपमात्रविश्रान्तिलक्षणः । इदानीं स्पन्दमा-त्रस्य स्वरूपात् प्रच्युतत्वेनापगतचलनात्मकः अपानसोम इति विशेषः । अतएवाधोवहननादलक्षणः सचासावपानसोमः । अतएव भोग्यविग्रहः । प्रथमं मनोमयान्तरात्मनि "चन्द्रमा मनसो जातः' इति श्रुत्या मनोमय-शरीरेण विलक्षणः लक्षणशून्यः विशिष्टग्रहलक्षणो वा मानसिकविग्रहः । पश्चात्क्रियाशक्त्यात्मना परिणतज्ञानशक्तिकः ज्ञानशक्त्यात्मना परिणतक्रि-याशक्तिको वा यथाधिकारं क्रियामयभोग्यशरीरः । ततोप्यनु तदुभयान्य-

तरात्मना सामरस्यात्मना वा कार्यमयभोग्यविग्रहश्चेत्यर्थः । अतएव 'अद्य-
तेत्ति च भूतानि तस्मादन्नं तदुच्यते' इति श्रुत्या। क्रियाकार्यान्यतरसामर-
स्यात्मकमनोबुद्धिप्रधानषडध्वमार्गविग्रहत्वेन परिणतसप्तस्रोतोमयहृदयोद्योग-
रूपेण 'स वा अयं मनुष्येषु यज्ञस्सप्तहोता । अमुत्र सद्भ्यो देवेभ्यो हव्यं
वहति' इति तैत्तिरीयब्राह्मणे द्वितीयकाण्डद्वितीयप्रश्ने सप्तमानुवाकोक्तसप्त-
होतृयज्ञमयकार्यशरीरेण परोक्षदेवेभ्योप्यमृतप्रदश्च भूत्वा वक्ष्यमाणशाक्तशा-
म्भवानुत्तरविसर्गप्राधान्येन पंचदशतिद्ध्यादिकालप्राणान्यतरत्रिवृत्पञ्चवाहश-
रीरेण च वृद्धिक्षयावनुभूयान्ततस्तदुभयसामरस्यात्मना विश्वोत्तीर्णोऽपि भव-
तीत्यधोवहननादलक्षणापानसोमस्य भोग्यविग्रहत्वमिति भावः । एवं ज्ञान-
क्रियायुतकर्तृकार्यक्रियापंचवाहमयभोग्यविग्रहःयस्त्वदधोवहननादलक्षणापानसो-
मोऽस्ति । तस्य आनन्दचक्रतनवः । आनन्दचक्रं सर्वानन्दमयाख्यं बैन्दव-
चक्रं तन्वते विस्तारयन्ति सप्तस्रोतोमयवागर्थान्यतरनादरूपेण तनूकुर्वन्ति
चेत्यानन्दचक्रतनवः षोडशकलाः 'ज्ञानमम्ब तव भेदितैः स्वैरस्तैतु योग इह
षण्डवर्जितै' रितिवक्ष्यमाणत्वात् । ज्ञानक्रियासमप्रधान'एव त्वया वागर्थषडध्व-
त्रिपुटीनादप्रकृतिरूपिण्या त्वयेत्यर्थः । कुतः कथम् "तदात्मानगं स्वय-
मकुरुत । तस्मात्तत्सुकृतमुच्यत इति । यद्वै तत्सुकृतं । रसो वै सः । रस-
गंह्येवायंलब्ध्वानन्दी भवति । कोह्येवान्यात्कः प्राण्यात् । यदेष आकाश
आनन्दो न स्यात् । एष ह्येवानन्दयाति" इति श्रुतेः । अधोवहन-
नादलक्षणापानसोमदहराकाशवृत्तिरूपिण्यास्तव कृद्धातुवागर्थज्ञानक्रियोभ-
यशक्त्यात्मकत्वेन शाक्तविसर्गविलासमय्या त्वया वागर्थक्रमयोर्द्वयोरपि
पूर्वोक्तप्राणादिनामकलान्तषोडशकलावाचकाः कामेश्वर्यादिमहानित्यान्तं ति-
थ्यादिकालशक्तिबोधकाश्चानुत्तराकारादिविसर्गान्ताष्षोडशस्वराः प्रथमं ज्ञा-
नशक्त्यभेदेन जिज्ञासिताः, पश्चाद्विवक्षिताः, तदनु कामेश्वर्यादिमहा-
नित्यान्ततिथिरश्मिदेवताप्रकाशात्मना भाविताः, विमर्शात्मना विमृश्य निर्मि-
ताश्च, ततोप्यनु यथाधिकारं यथाक्रमं च पूर्वोक्तप्राणादिनामान्तषोडशसं-
ख्याक्रमनश्चन्द्रकलाद्यात्मना परिणमय्यारोहावरोहाभ्यासक्रमेणाव्ययावच्छि-

क्षिताश्च भवन्तीत्यहो त्वदीयाधोवह्ननादलक्षणापानसोममयविद्यात्रिषयानन्दचक्रकामकलागुरुक्रमोपाख्यविद्यातुरीयपादे विमर्शकधौरेयस्य स्फुट इति पाठान्तरमिषेण स्पष्टयति— कृतात्ययानन्दचकृतनव इति। 'अय् पय् गतौ' विति धातोः गत्यर्थकधातूनां प्राप्त्यर्थकत्वनियमाच्च कृतः शिक्षितः अत्ययः पूर्वोक्तनष्टार्थचतुष्कावभासनादिस्वस्वरूपलाभपर्यन्तपञ्चवाहमहार्थक्रमः यस्य तत्तथोक्तमानन्दचक्रमेव तनुर्यासां तास्तथाभूताष्षोडशकलाः भवन्तीति स्पष्टोर्थः। एतेन सकला विद्याऽविद्यात्मिकापि सृष्टिश्चित्तप्रबोधलक्षणशाक्तानुत्तरविसर्गत्रिलासात्मनौ कामकलामयानन्दचक्राभिन्नेति फलितार्थः। एतदेवोक्तं मालिनीविजयवार्तिके चतुश्चत्वारिंशत्श्लोकादिप्रदेशतश्लोकैर्व्यावहारिकभेदस्यापि निराकरणेन तत्रैव द्रष्टव्यम्। महार्थमञ्जरीपरिमलेपि— 'दुःखान्यपि सुखायन्ते विषमप्यमृतायते। मोक्षायते च संसारो यत्र मार्गस्स शाङ्करः' इति ॥४९-६७॥

ऐवमानंदचक्रस्वरूपविभूतिं व्याख्याय तदीयनादनवकप्रतीकोपासनोपयोगितया "ब्राह्मं दिव्यं तथा पित्र्यं प्राजापत्यं गुरोस्तथा। सौरं च सावनं चान्द्रमार्क्षं मानानि वै नव" इत्युक्तनवविधकालमानस्वरूपसृष्ट्यादिकृत्यपंचकपंडितायाः महाकाल्याः वक्ष्यमाणकालसंकर्षिणीवह्निमूर्तिमयमहाचक्रे पूर्वोक्तप्रकाशानंदकालचक्रप्रवर्तकसूर्यचंद्रयोः विद्याऽविद्यामयवागर्थव्यावहारिकनेत्रद्वयात्मकतां स्वस्यैव वह्निमयतृतीयनेत्रतां च पाठभेदसिद्धामुद्घाटयति—

वासरेशरजनीशयोः कला
(श्चं (चं) डि यावदुदयं वित (न्व (न्य) ते।
तावदेव (तंचदेव) दिवसक्षयोद (य (या)
स्त्वयतः (त्वत्कृत) प्रकटगुप्त·(विग्रहः) विष्टपाः॥६६-६८॥

वासरेत्यादिना। अत्र प्रथमं कलाशब्दबहुवचनपाठमनुसृत्य व्याख्यायते। हेचंडि 'चडिकोपे' इति धातोः त्रैवर्णिकभावापन्नत्वदीयनेत्रबिंदुषु स्वरूपे वा मंडलत्रयात्मकेषु भेदकल्पके पुरुषे क्रोधिनीति साभिप्रायसंबुद्धिः। वासरेश-

रजनीशयोः। कालज्ञानक्रियानियामकत्वेन त्वदीयनेत्रभूतयोरितिभावः। कलाः यथाक्रमं मासार्धमासयोश्शुक्लकृष्णनियामिकाः द्वादशसंख्याकाः वासरे शकलाः, तिथिषु दिवानिशाख्यशुक्लकृष्णनियामिकाः षोडशसंख्याका रजनीशकलाश्च। यावदुदयं वितन्वते। यावताकालेन स्वस्वोदयं विस्तारयंति। यद्वा। "यावत्पुरा निपातयोर्लट्" इति भविष्यदर्थकलडंतविवक्षया उदयं विस्तारयिष्यंतीति ज्ञात्वा वेत्यर्थः। तावदेव तावता कालेनैव। तत्वतः पूर्वतरश्लोकसूचितद्वादशतत्वभावतः, पूर्वश्लोकसूचितषोडशतत्वभावतश्च। प्रकटगुप्तविग्रहः। त्वदीयवह्निमूर्तिमये वर्षकल्पे प्रकाशचक्रसंबंधिद्वादशकलातत्वभावतः मासादौ प्रकटः मासांते गुप्तश्च विग्रहः त्वदीयकालज्ञानप्रधानसोमनेत्रविग्रहः तथैव दिनकल्पे तिथ्यादौ प्रकटः तिथ्यंते गुप्तश्च "यां तिथिं समनुप्राप्य उदयं याति भास्करः। सा तिथिस्सकला ज्ञेया श्रौतस्मार्तादि कर्मसु" इति शास्त्रात् त्वदीयकालक्रियाप्रधानव्यवहारदक्षिणः प्राणसूर्यमयविग्रहश्च यस्मिन् स तथोक्तः। दिवसक्षयोदयः दिवसाश्च क्षयाश्च दिवसक्षयाः अमांतव्यावहारिकचांद्रमानसिद्धाः पूर्णिमांतव्यावहारिकबार्हस्पत्यमानसिद्धा वा अमापूर्णिमान्यतरामासात्मिकाः द्वादशसंख्याकाः दिवारात्रय इत्यर्थः 'संवत्सरप्रतिमा वै द्वादश रात्रयः'इति श्रुतेरिति भावः। तथैव 'शुक्लः स्वप्नाय भूतानां चेष्टायै कर्मणामहः" इति पूर्वोक्तमात्स्यपुराणवचनानुसारेण च द्वादशसंख्यकपितृमानसिद्धशुक्लपक्षपितृरात्रिरूपाः कृष्णपक्षपित्रहोरूपा वा "चतुर्विंशति रर्धमासा स्संवत्सरः" इति पितृदेवमानश्रुतेश्च वर्षकल्पेद्वादशसंख्याकचांद्राहोरात्ररूपाः। तथा षष्ट्युत्तरशतत्रयसंख्याका स्सावनाहोरात्ररूपा दिवसक्षयाश्च। तेषामुदयः। भवतीति शेषः। तं च देवदिवसक्षयोदय इति पाठे। तमुदयमनुसृत्य। देवयोः प्रकाशानंदचक्ररूपयोर्व्यावहारिकचंद्रसूर्ययोः दिवसक्षयोदयो भवतीति। दिवसक्षयोदया इति बहुवचनपाठे। त्वत्प्रकटगुप्तविग्रहा इति बहुवचनपाठांतराश्रयणेन भवंतीतिचाध्याहारेणान्वयः। इयं वासरेशरजनीशयोः कला इति बहुवचनकलाशब्दानुसारिणी व्याख्या। अथ वह्निमूर्तिमयतृतीयनेत्रव्याख्यापक्षे—

वासरेशरजनीशयोः कला "भीषाऽस्माद्वातः पवते। भीषोदेति सूर्यः" तथा "सूर्याचंद्रमसौ धाता यथा पूर्वमकल्पयत्' इत्यादि तैत्तिरीयोपनिषदि नारायणी परिशिष्टेच श्रुतेः। दक्षवामनेत्रभूतयोस्तयोर्मध्यकेंद्रस्थित्या तदुभयसृष्ट्यादि कृत्यपंचकनियामिका तृतीयाग्निनेत्रमूर्तिमयी ब्राह्मी मूर्तिकलेति यावत् "ब्रह्म-विग्रहकलाधिरोहिणी' इति वक्ष्यमाणत्वात्। यावत् यावता कालेन। उद-यं आत्मोन्मेषं प्रति। वितन्यते विस्तार्यते। अग्निमूर्तिचक्ररूपिण्या त्वयै-वेति शेषः। तावदेव त्वत्कृतप्रकटगुप्तविष्टपाः त्वत्कृते त्वदीयचिन्मयकृ-त्यपंचके कृतयुगे वा, त्वत्कृते त्वन्निमित्त वा त्वत्स्वरूपाववोधार्थमित्यर्थः। प्रकटानि गुप्तानि च विष्टपानि येषु ते तथोक्ताः। तत्वतः प्रकटगुप्तवि-ग्रह इति पाठे— षट्त्रिंशत्तत्वभावतो प्रकटा गुप्ताश्च विग्रहा यस्मिन् दे-वदिवसक्षयोदये 'चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते' इत्युक्तब्राह्माहोरात्रक-ल्पानां 'उन्मेषनिमिषोत्पन्नविपन्नभुवनावलिः' इत्युक्तब्रह्मदिवसक्षयोदयस्य वा भुवनावलिरूपस्य त्वदीयोन्मेषनिमेषमात्रकालिकत्वादिति भावः। तादृश-देवदिवसक्षयोदयो भवतीति। तत्वतः प्रकटगुप्तविष्टपा इति बहुवचनपाठे-देवदिवसक्षयोदया इति बहुवचनपाठान्तरेणैवान्वयः। देवनां त्वदीयपीठाव-यवपञ्चब्रह्मणां दिवसक्षयोदयाश्च भवन्तीति चान्वयः। उक्तंच लघुबृंहण्यामपि-ब्रह्मायुषो दशगुणं विष्णोरायुः परं स्मृतम्। सहस्रगुणितं तस्माद्रुद्रस्यायुः परं किल॥ तस्माल्लक्षगुणं प्रोक्तमीश्वरस्यायुरुत्तमम्। तस्मात्सदाशिवस्यायुः प्रोक्तं कोटिगुणं बुधैः॥ समुद्रगुणितं तस्माच्छिवयोर्देहधारणम्॥' इति। अतएव पूर्वं "मानमेयमिति नेतृलक्षणा' इति श्लोकव्याख्यानावसरे प्राणादि-नामकलापर्यन्तषोडशकलात्मको ब्रह्मणस्समष्टिवासनामनोमयश्चन्द्र अविना-शिसादाख्यनामकलामात्रावशेषेण सुषुप्तौ व्यष्टिमन इवावशिष्टपञ्चदशकला-भिस्सह समष्ट्यात्मकचित्प्राणसूर्यात्मनि यदा लीयते तदा ब्रह्मणोपि केव-लतमोमयी अविद्यारात्रिः व्यवहारचन्द्रस्य दर्शइवोद्भवति। समष्टिचित्प्राणसू-र्यविवेकेन यथा यथा कलानामात्मनः पृथग्भावस्तथा तथा बोधमयश्चन्द्रो-पि वर्धते। सा तु सत्वपुरुषान्यथाख्यातिरेव सूर्यचन्द्रयोरत्यन्तविशेष

रूपा विद्या पौर्णमासी च कलाषोडशकेन षोडश्या वा कलया मनश्च-न्द्रोपेता सम्भवति । अत ऋतस्य कर्मणः फलभूतं शिवसंसारचक्रं विद्वद्दृष्ट्या "पञ्च दश वा अर्धमासस्य रात्रयोर्थमासशस्संवत्सर आप्यते तासां त्रीणि च शतानि षष्टिश्चाक्षराणि तावतीस्संवत्सरस्य रात्रयोक्षरश एव संवत्सरमाप्नोति" इति सामिधेनीब्राह्मणोक्तप्रकारेण स्वरवर्णमात्राक्षररूपत्वात्कालचक्रावयवाहोरात्राणां तत्रापि सूर्यचन्द्रप्रधानविद्याऽविद्याचक्षुरुन्मेषनिमेषात्मकतयाऽमापूर्णिमात्मकमासकल्पयोरपि "कतमासादेवाक्षरा बृहती । यस्यां तत्प्रत्यतिष्ठत् । द्वादश पौर्णमास्यः । द्वादशाष्टकाः । द्वादशामावास्याः । एषा वावसादेवाक्षरा बृहती । यस्यां तत्प्रत्यतिष्ठदिति" इति तैत्तिरीयब्राह्मणे प्रथमकाण्डे पञ्चमप्रपाठकचरमानुवाके छन्दोरथप्रस्तावे प्राजापत्यछन्दोरथश्रुत्युक्तप्रकारेण कार्यब्रह्मकलासु बृहतीछन्दोमयदैवताक्षरात्मकत्वेन श्रुतितात्पर्यविषयत्वाच्च आत्मविलासाक्षरतत्त्वात्मकं कालचक्रमविद्वत्साधकानां विद्योन्मेषार्थं करुणया श्रुतिस्मृत्यादिकल्पितजननमरणप्रवाहे कृत्यपञ्चकसंसारात्मना कालचक्रात्मकं श्रीचक्रमेव । आसुरजीवलोकस्य तत्तज्जीववासनानुरोधेन सुनाभनामकं विष्णुसुदर्शनाख्यं मारकचक्रमपि भवत्येव । एतेन कालप्रवर्तकचन्द्रसूर्यनक्षत्रादिब्रह्मलोकान्तखगोलस्थदेवसद्मसु तत्तल्लोकलोकेशकालपरिमाणभेदेन स्वस्वलोकलोकपालसृष्टिस्थितिलयादिकृत्यपञ्चकाधिकारनिर्वाहाय तत्तच्छतवार्षिकायुःपरिमापककालशक्त्यास्तव कालसङ्कर्षिण्यास्सर्वलोकैकजननीत्वमग्निसूर्यसोममण्डलत्रयचक्षुष्कतयैवान्वर्थकमिति भावः । अतएव नादमातृकायां नादनवकस्येव वर्णमातृकायां चतुर्दशस्वरवर्णान्ते बिन्दुत्रयस्य मालिनीविजयोक्तपुनःपुनःप्रक्षोभगणनेन सप्ताष्टादशान्तेन स्वायंभुवस्वरवर्णपर्यन्ततया कृत्यत्रयादिषडध्वान्तं वर्णपरामर्शलाभोपीति मातृकान्तरसामरस्यं वेदितव्यम् । तदयं मन्त्ररामायणकारेणोक्तस्सर्वदेवतानां कृत्यपञ्चकाधिकारसंग्रहः "एकैकस्मिन्यथादर्शे प्रासादो मुहुरान्तरैः । सहितो दृश्यते देवेष्वेवं लोकस्सुरान्तरैः ॥ तस्मात्स्युर्देवतास्सर्वाः प्रत्येकं विश्वयोनयः । अन्योन्ययोनयश्चैव यथायास्कमुनीरितम् ॥" इत्यादिना या-

स्कनिरुक्तोदाहरणेन तत्र किंचित्प्रपंचितस्तत्रैव द्रष्टव्यइत्यलं विस्तरेण ॥

अथेदानीं कालसङ्कर्षिणीमहाकाल्याः प्रमाणपदात्मकतार्तीयनेत्रात्मना पूर्वोक्तवासरेश्वरजनीशमूर्तिकलयोर्विपर्यासितप्रमातृप्रमेयभावेन व्यावहारिककालनेत्रीत्वमुपासनामार्गे इत्यमुं रहस्यार्थमपि सूचयन्नग्निमहाकालीमूर्तिचक्ररूपतां दर्शयति—

देवि! तद्द्वयकलाविमिश्र (णा) या
सामरस्यपदमेति या स्थितिः ।
विन्दुनादसमवेद्यवेदका
न्तर्गता हि तव मूर्तिरत्र सा ॥६९॥

देवीत्यादिना । हेदेवि! वाङ्मनःप्राणमयमण्डलत्रयात्मना प्रकाशात्मिके इति सम्बुद्ध्यर्थः । तद्द्वयकलाविमिश्रया तयोर्वासरेश्वरजनीशयोर्द्वयस्य कलानां तदीयमूर्तिकलयोर्वा पूर्वोक्तद्विषट्करूपञ्चदशकलासङ्ख्यामेलनेन सप्तविंशतिनक्षत्रमूर्तिरूपाणां वा मण्डलत्रयाभिन्नप्रधानमूर्तिकलयासाकमभेदविवक्षया "ब्राह्मणो वा अष्टाविंशो नक्षत्राणाम्" इति श्रुत्युक्ताभिजिन्नक्षत्राख्यसादाचन्द्रकलारूपाणां भेदविवक्षायां त्रिंशत्तिथिसमष्टिद्वादशमासरूपाणां कलानां वा । तत्सम्पादकमूर्तिकलयोर्द्वयोर्वा विमिश्रः विलक्षणमेलनं यस्यां त्वदीयाग्निमूर्तिकलायां तया तथोक्तया तद्द्वयकलाविमिश्रया । त्वदीयाग्निमूर्तिकलया सह । विन्दुनादसमवेद्यवेदकान्तर्गता ज्ञानक्रियापरपर्यायविन्दुनादद्वयभावात्मना समौ यौ वेद्यवेदकौ । प्रमेयप्रमातृव्यवहारलोचनभूतौ सूर्यचन्द्रौ तयोरन्तर्गता स्थितिः । प्रमावेदनावेदाद्यपरपर्यायाग्निमण्डलचिदिच्छारूपिण्यास्तव ताद्रूप्येण मध्यस्थितिः "स्थितिः स्वरूपारोहित्वं प्रतिबिम्बवदेवं यत् । स्थितिर्नाम स्वरूपस्य तत्तद्रूपतया धृतिः" इत्युक्तजाठरवैश्वानरात्मना विम्बप्रतिविम्बान्यतरमूर्तिधारणनैपुण्यमिति वा अर्थः । इत्युक्तलक्षणा या स्थितिः सामरस्यपदं मण्डलद्वयमाध्यस्थ्यं प्रमातृसूर्यमूर्त्यात्मना प्रमेयचन्द्रमूर्त्यात्मना समरसभावं वा एति प्राप्नोति । यद्वा प्रमेयप्रमाणप्रमातृवाङ्मनःप्राणमण्डलत्रयेपि वाङ्मयत्रिपुट्यां वागर्थनादमूर्तिषु

ऋग्यजुस्सामात्मिकासु त्रयीमूर्तिमयीषु "प्रजापतिं वै देवाश्शुक्रं पयो दुहन्। तदेभ्यो नव्यभवत् । तदग्निर्व्यकरोत् । तानि शुक्रियाणि सामान्यभवन्। तेषां यो रसोत्यक्षरत् । तानि शुक्रयजूंष्यभवन्" इति शुक्रीयकाण्डश्रुत्युक्तप्राणवायुनादरसाभिन्नयजुर्वेदपूरुषवाङ्मूर्तिमयी "तस्य यजुरेव शिरः। ऋग्दक्षिणः पक्षः । सामोत्तरः पक्षः" इति तैत्तिरीयब्रह्मवल्लीश्रुत्युक्तदक्षिणोत्तरपक्षऋक्साम्नोर्वागर्थनादयोर्मध्यपदस्थित्या शिरश्शब्दार्थप्रधानरसभावापत्तिरूपं सामरस्यम् । तत्रैव "शुक्रियाणां वा एतानि शुक्रियाणि । सामपयसं वा एतयोरन्यत् । देवानामन्यत्पयः । यद्गोः पयः । तत्साम्न. पयः । यदजायै पयः । तद्देवानां पयः" इति वाक्यशेषोक्तगोशब्दार्थसारस्वतनादपयो रसप्रधानभावरूपं एति प्राप्नोतीति वा अर्थः । एवमेव मनःप्राणत्रिपुट्योरपि नादमूर्तिस्थितिसामरस्यं योज्यम् । सर्वत्र वागर्थनवकापरपर्यायनादनाथमिथुनसामरस्यस्यैव मूर्तितत्त्वरूपत्वात् । तद्द्वयकलाविमिश्रणेति पाठे– स्थितेर्विशेषणमिति ज्ञेयम् । सा स्थितिरेव । अत्र प्रमात्रादित्रिपुटीमध्यकेन्द्रे तव मूर्तिर्हि हीति सकलवेदशास्त्रप्रसिद्धिद्योतको निपातः । इयमेवेदृशी त्वदीया मूर्तिरिति सकलवेदशास्त्रादिवाङ्मनःप्रभृतिकप्रमाणजातं संवादत इति भावः । अत्र- "अन्नमयं हि सोम्यमन आपोमयाः प्राणास्तेजोमयी वाक्" इत्यादिछान्दोग्यश्रुत्युक्तवाक्प्राणमनसां यथेच्छं प्रत्येकमपि वेद्यवेदकापरपर्यायप्रमेयप्रमातृभावमध्यस्थित्या त्रिपुटीमूर्तित्वं मूर्तित्रिपुटीत्वं वा सम्पादनीयमित्यपि मूर्तिचक्ररहस्यमिति संक्षेपः ॥४७-६९॥

एवं वेद्यवेदकप्रकाशानन्दचक्रात्मनोस्सूर्यचन्द्रयोरन्तरङ्गतायासुन्मनीनादनवकमहाकालीवह्निमूर्तौ संहारेपि महासङ्कर्षणाग्निमूर्तिविलासे नादनवकस्वरवर्णासांख्ययोगसामरस्यखण्डचक्रेपि गुरुक्रमात्मना मूर्तिचक्रत्रिपुटीस्थितिं दर्शयति—

लीढभानुशशिमण्ड[ला [ल] स्थिति
लें [भि [वि] ता प्रलयवह्निना त्वया ।
प्राणधाम्नि दश सप्तधा सती
मूर्तिराश्रितगुरुक्रमा शिवे ॥७०॥

लीढभान्वित्यादिना । हेशिवे अधिकरणभूतसाधकशिवे इति सप्तमी वा प्रलयवह्निना त्वया सङ्कर्षणाख्यप्रलयप्राणाग्निरूपिण्या त्वया । लीढभानुशशिमण्डला पूर्णविद्योदयपर्यन्तं भानुमण्डलात्मना वेद्यवेदकपदाम्भोषोमशाक्तविसर्गबिन्दुद्वयान्तराले स्थित्वा विद्योदयोत्तरमाणवोन्मनीविसर्गमर्यादया उदितविद्यादाढ्याय वेद्यवेदकपदापन्नयोस्सूर्याग्न्योरन्तराले अभिजित्सादाकलाचन्द्राख्यसोममण्डलात्मना शाक्तविसर्गमर्यादया च स्थित्वा विद्यादार्ढ्यलाभोत्तरं व्यावहारिकमण्डलत्रयसंहारेच्छया शाम्भवविसर्गभावेन अपांवत्सनक्षत्रगोलापरपर्यायमुख्यप्राणसङ्कर्षणवह्निमण्डलमूर्त्यात्मना व्यावहारिकत्रिपुटीमण्डलत्रयमात्मसात्कृत्य तुरीयचिदग्निमूर्तिरूपेण लीढभानुशशिमण्डलास्थितिर्लम्भितेत्यर्थः । लीढभानुशशिमण्डलस्थितिर्लम्बितेति पाठान्तरपक्षे– पूर्वोक्ततृतीयनेत्रमूर्तिकलाविशेषणम् । लीढा आत्मसात्कृत्यागिलिता । भानुशशिमण्डलयोः स्थितिः । "स्थितिः स्वरूपारोहित्वं प्रतिबिम्बवदेव यत्" इत्युक्तलक्षणापरिवर्तिततुरीयानिकेतस्थितिर्वा यस्यां मूर्तिकलायां सा लम्बिता । अवलम्बितेत्यर्थः । सैव स्थितिर्मूर्तिकला वा । प्राणधाम्नि मुख्यप्राणतेजसि । दश सप्तधा सती । प्राणापानादिमुख्यप्राणवृत्तिपञ्चकेन नागकूर्माद्युपप्राणवृत्तिपञ्चकेन च सह दशधा । मनोबुद्धियुतज्ञानकर्मान्यतरेन्द्रियपञ्चकेन गणनायां सप्तधा । यद्वा, तन्त्रोक्तदशवह्निकलानां कालीकरालीत्यादीनां हिरण्याकनकादीनां वा वह्निजिह्वानां मेलनेन वा सप्तदशधा । महार्थमञ्जरीपरिमलादौ वह्निमूर्तिचक्रवर्णनस्य दर्शनात् । कृष्णयजुर्वेदेऽपि तैत्तिरीयसंहितायां वह्नेः प्राजापत्यमूर्तिवर्णनप्रस्तावे प्रथमकाण्डषष्ठप्रपाठकैकादशानुवाके "यो वै सप्तदशं प्रजापतिं यज्ञमन्वायत्तं वेद" इत्यादौ "आश्रावयेति चतुरक्षरमस्तुश्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं येयजामहे इति पञ्चाक्षरं "द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिः" इत्याद्युक्तप्राजापत्यवह्निमूर्तिचक्रस्वरूपे आश्रावयेति चतुरक्षरमिति साङ्केतिकवाक्येन । 'अ इ उण्' प्रत्याहारात्मकस्य सार्थविसर्गस्यान्तर्मुखस्याणवविसर्गप्रत्यगात्मनः अस्तु श्रौषडिति चतुरक्षरमित्यनेन तदीयदीर्घस्वरत्रिकयुतविसर्गाषडक्षपरा-

मर्शस्य, यजेति द्व्यक्षरमित्यनेन सन्धिस्वरान्यतरयुगलस्य, ये यजामहे इति पञ्चाक्षरमित्यनेन ऋ ॠ ऌ ॡ वर्णचतुष्टयस्य षण्डस्वरात्मकस्य आणवार्थबिन्दुयुतस्यैव, द्व्यक्षरो वषट्कार इत्यनेन प्रसरणप्रतिसञ्चरणात्मकशाक्तशाम्भवानुत्तरविसर्गपरामर्शषट्कद्वयस्यच 'एष वै सप्तदशःप्रजापतिः' इत्यादिवाक्यशेषेण बीजयोनिविधिभेदभेदितक्रियाशक्तिमयमातृकार्णकदम्बस्य तन्मूलभूतस्वरखण्डस्यवा मूलस्वरषोडशके स्वरकदम्बे 'षोडशकलो वै पुरुषः'' इत्युक्तवाङ्मयपुरुषस्वरूपे आणवविसर्गार्धानुस्वारयोगाभिसन्धिना अनुत्तरशाक्तविसर्गावयवाग्नीषोमबिन्द्वोवा भेदविवक्षया वाक्पदे छन्दोवीर्यापरपर्याये शब्दब्रह्मण एव समष्टिवाङ्मयप्राजापत्यपुरुषमूर्तिसङ्केतेन श्रुतिविवक्षितत्वाच्च। नादमयवागर्थप्राणधाम्नि स्वरमयनाधनवके वा वागर्थषडध्वत्रिपुटीमहापञ्चार्थक्रमव्यष्टिसमष्टिप्रकारेणापि सप्तदशविधा सती वागर्थप्राणनादसामरस्यात्मिका त्वदीयमुख्यवह्निमूर्तिराश्रितगुरुक्रमानुत्तराकारधामसंविद्वर्णक्रमेषु त्रिष्वपि आकारादिश्रितगुरुक्रमा भवतीत्यर्थः। इदमेव सकलवागर्थसामरस्यात्मकमण्डलत्रयपरामर्शप्रथमसूत्रात्मना एकधा। नादनवकाभिन्नस्वरनवकबोधकसूत्रचतुष्टयात्मना तुर्यधा। चतुर्दशभुवनात्मकमाहेश्वरचतुर्दशसूत्रकदम्बात्मनाच "नव तुर्यधा गमः" इति श्लोकवाक्यशेषेणापि सूचितं तुरीयशुद्धविद्यामयं चिदग्निमूर्तिचक्रमिति। हल् इत्युक्तचतुर्दशतमसूत्रहल्वर्णहकारस्य पञ्चमसूत्रेण गतार्थत्वेपि द्वादशसूत्रकदम्बमात्रविश्रान्तौ ऊष्मवर्णत्रिकस्य 'श ष स र्' इति त्रयोदशतमसूत्रोपदिष्टस्य विद्याक्रमे सान्तत्याभावेनापि विद्यासन्ततिनाशासम्भवादतोपि पूर्वोक्तनष्टसन्ततित्वं नादद्वादशान्तविश्रान्तिमुखेन प्रणव इव माहेश्वरसूत्रेपि त्रयोदशे 'यःकिलासे'ति प्रथमविमर्शश्लोकोक्तपरामन्त्रमयशाक्तवर्णप्रत्याहारसिद्धर्थ्यं द्योतितमिति पूर्वोक्तगुरुपुष्पसङ्कोचक्रमः स्वरव्यञ्जनखण्डद्वयेपि समवलम्बनीय इति रहस्यम्। अतएव वेदाङ्गशीक्षायामेकविंशतिपर्यन्तः स्वरखण्डवर्णक्रमः पठितः सतु पुरस्ताद्विवेचयिष्यते ॥

एवं कालसङ्कर्षिणीचिदग्निमूर्तिचक्रगुरुक्रमं विविच्य तदीयकामकलाविभूतिवर्णनेन तस्या एव कामकलाकाल्यभेदमपि द्योतयन्, तदीयनेत्रत्रयात्मक-

मन्डलत्रयस्य तेजोवन्नात्मकभूतत्रयाभेदेन संहारस्थितिसृष्टिमयकृत्यत्रये वक्ष्यमाणवर्णक्रमे विद्याऽविद्यामयसुषुप्तिस्वप्नजागृदवस्थात्रयेच संवित्क्रमे स्वस्वरूपमयतुरीयस्थानादेव धाम्नइतीच्छाज्ञानक्रियासंवित्क्रमप्रसारं वर्णयति।

इष्टबोधकृतशक्तयस्त्वया
संहृतिस्थितिविसृष्टिसद्मसु।
तुर्यचित्पदमयप्रसारिता
स्सुप्तितः प्रभृति धामसु त्रिषु ॥७१॥

इष्टेत्यादिना— संहृतिस्थितिविसृष्टिसद्मसु- सीदन्त्येतेषु स्वेच्छया सिद्धा इति व्युत्पत्त्या सद्मानि सिद्धानां विश्रान्तिस्थानानि। संहारादिकृत्यत्रयाधिकारपदानीत्यर्थः। तेषु। इष्टबोधकृतशक्तयः। सुप्तितः प्रभृति धामसु त्रिष्विति लिङ्गात् प्रथमं विद्याऽविद्यान्यतरसंहारक्रमे। इष्टः इच्छाविषयीकृतः विद्याविद्यान्यतरसंहारसङ्कल्पः। बोधः तत्तद्विषयकं ज्ञानम्। कृतं तत्तदनुकूलं कर्म च बाह्यक्रियासृष्टिरूपमिति तिस्रः तेषां शक्तिसामर्थ्यसवन्ध्येच्छादि सिद्धिरूपं चेति चतस्रो वा। त्वया पूर्वोक्तप्रकाशादिचक्रत्रये संहारप्रधानदशकलाऽभिन्नामूर्तिचक्रगुरुक्रमे परौघमहौघदिव्यौघगुरुक्रमत्रिपुटीनवकसमष्टि देवतारूपया दशम्या। तथा स्थितिसृष्टिप्रधानद्वादशषोडशकलाऽभिन्नप्रकाशानन्दचक्रयोर्गुरुक्रमेऽपि शेषमानवसिद्धौघदिव्यौघचतुष्टयगुर्वौघसमष्टिमहाबिन्दुरूपया त्रयोदश्या सप्तदश्याच त्वयैवेत्यर्थः। धामसु त्रिषु धमन्त्युच्छ्वासनिश्वासवायुवृत्तिभिरेष्विति, धम्यन्ते पूर्यंते कर्मवासनाभिरन्तर्बाह्येन्द्रियाणि वा एष्विति धामानि स्थूलसूक्ष्मकारणशरीराणि। तेषु त्रिषु सुप्तितः प्रभृति जडचिन्मयान्यतरसुषुप्तिमारभ्य तुर्यचित्पदमयप्रसारिताः संहारक्रमे तुर्यचित्पदमयं नादान्तनादनवकशक्तिरूपं तदर्थं प्रसारिताः विस्तारिता भवन्ति। सृष्टिक्रमेतु द्वादशान्तमहाबिन्दुमारभ्य कामकलान्तगणनया इष्ट इच्छाविषयीकृता कामकला चक्रत्रयाभिन्नलिपित्रयनिर्माणविषयिणी। बोधाः त्रिविधलिपिवासनारूपाः। कृतानि तदीयबाह्यव्यापारसामर्थ्यावलम्बनेन आंतरवासनासंहृतिरूपाः कृतयः, शक्तयः तदीयव्यक्तिनिर्माणशक्तयः इति मिलित्वा द्वादश। त्रयोद-

शं व्यक्तिनिर्माणं द्वादशान्तमहाबिन्दुरूपं । एवं वक्ष्यमाणनिकेतस्थितिक्रमेऽपि षोडशांतमूह्यम् । एवमिष्टबोधकृतशक्तयः । तुर्यचित्पदमयप्रसारिताः "यद्व- शिवं तन्मयः" इति श्रुत्या तुर्यचित्पदमेव मयः स्वात्मानन्दसुखं । तद्रूपेणैव प्रसारिता भवन्ति । एवं जडप्रपंचेपि पंचवाहमहार्थरूपे प्रथमं सिद्धौघरूपि ण्या त्वया पूर्वानुभूतसौषुप्तानन्देच्छावदेव पूर्वानुभूतजडवैषयिकानन्देच्छा ज- न्यते । तदनु, मानवौघरूपिण्या मननात्मना स्वप्नावस्थायामिव तदवाप्त्युपा- यो बुध्यते । ततोप्यनु, शिष्यौघरूपिण्या तदनुकूलकर्मानुष्ठापनेन साधकोपि तच्छेषीक्रियतइति सिद्धमानवशिष्यौघाख्यगुरुपंक्तिक्रमो बहिर्मुखसाधकवर्गस्त दुभयक्रममध्यकेन्द्रवर्तिनी श्रीकामकला काली भुक्तिमुक्तिप्रदा आश्रितगुरुक्र- मा मूर्तिर्भवति । सैव दिव्यौघादिशिष्यौघांतचतुष्टयौघरूपिणी महौघांतप्र- काशचक्रद्वादशान्तरश्मिविश्रान्ता चेत्प्रकाशानन्दयोश्चक्रगुरुक्रमरूपापीत्यतो पि द्वादशगुरुक्रमविच्छेदात् नष्टसन्ततित्वमिति सर्वमनवद्यम् ॥४९-७१॥

एवमुक्तकामकला काली तुरीयपदमेवानाख्यकालीकालतुरीयपदमपि भवतीति विविनक्ति—

मेय (मातृ (मान] मिति लक्षणं कुलं
प्रान्ततो [प्राप्तितो) व्रजति यत्र विश्रमम् ।
तत्पदं तव तुरीयमम्बिके
यन्महाब्धि (य महाब्धि) रनुपाख्यमिष्यते ॥७२॥

मेयमित्यादिना । हेअम्बिके मेयमातृमितिलक्षणं मेयमातृमितिस्व- रूपं । कुलं सजातीयसमूहः । मेयमानमितिलक्षणमिति पाठे- प्राप्तित इति पाठान्तरदृष्ट्या मानशब्दोऽभिमानविश्रान्तिबोधनपरः । मेयमानमिती- र्लक्षयतीति मेयमानमितिलक्षणम् । कुलं । सशक्तिकब्रह्मविष्णुरुद्रग्रन्थित्रय- नामकमूलाधाराद्याज्ञाचक्रान्तचक्रषट्कमित्यर्थः । तल्लक्षणं तु पूर्वमस्मिन्नेवविम- र्शे 'पञ्चवृत्तितनुरम्बे' त्येतच्छ्लोकव्याख्यानावसरे विवेचितं । प्रान्ततः पकारस मीपतः मेयमातृमानमितिशब्दानां प्रवर्णसामीप्यात् प्रमेयप्रमातृप्रमाणप्रमिति- शब्दाकारेण निष्पद्यमानत्वात् । प्रान्ततः प्रकाराग्रतः यत्र स्थाने । पा-

ठभेदक्रमेण प्रमाणस्थाने प्रमातृस्थाने वेत्यर्थः। विश्रमं व्रजति। दिव्यमहापरौघाख्यकारणगुर्वोघविश्रान्तिस्थाने विश्राम्यतीत्यर्थः। प्राप्नितो व्रजतीति पाठे- मेयमातृ (मान) मितिलक्षणकुलस्य प्रकाराप्तितः परमप्रमातृकुलस्थाने इति यावत्। विश्रमं व्रजतीति समानम्। यत् परमप्रमातृरूपं कुलविश्रमस्थानम्। महद्भिः महौघाख्यगुरुभिः आदिसिद्धनाथादिभिर्वा हृदयचन्द्रिकाद्युक्तगुरुक्रमवंशीयैः। अनुपाख्यं 'अन चलने' इति धातोः प्राणस्पन्दमात्रोपनामकं इष्यते इच्छावागर्थरूपतया विषयीक्रियते। तत् तव तुरीयं पदम्। त्वदीयतुरीयस्थाने तदेव। यं महाब्धिरिति पाठे- यं परमप्रमातृविश्रमं प्रमात्राहमभिमानं वा इत्यर्थः। महाब्धिः पूर्वोक्तनिस्तरङ्गशिवचित्पयोनिधिः अनुपाख्यं प्राणस्पन्दमात्रोपनामकं अव्यभिचरितवागर्थस्पन्दमात्रानामरूपात्मकं वा इष्यते इच्छति तत्तव तुरीयं पदमेवेत्यन्वयः ॥९०-७२॥

एवमुक्ताऽव्यभिचरितवागर्थस्पन्दमात्रनामरूपात्मकं त्वदीयप्राणस्पन्दनादनामकं तुरीयपदमेव सांख्ययोगत्रिपुटीमार्गसंप्रदायभेदेन मुद्रात्रिपुटीमात्रप्रभेदेन च त्रिपादेकपाद्विभूतिद्वाभ्यां गुरुसंप्रदायपरंपरां भजत इत्याह—

चाररावचरुभिर्विभेदितै
मुद्रया च यदुपासनं तव।
तद्वशेन भजते परंपरां
तावकक्रम (गता स्थिरीकृतिः) तया स्फुटाकृति) ॥७३॥

चाररावेत्यादिना। विभेदितैः गुरुशास्त्रशिष्यनामकपराग्वूर्ध्वस्रोतोमयगुरुसंप्रदायभेदेन सिद्धिमननशेषतापरपर्यायतिर्यक्स्रोतोमयगुर्वौघक्रमसम्प्रदायभेदेन वा विशिष्यसञ्जातभेदैः। चाररावचरुभिः अत्र चारादिशब्दत्रयेण गूढचारन्यायेन प्रमात्रादिमुख्यात्मत्रिपुटी विवक्ष्यते। यद्वा चरभक्षणे इति धातोः चारः भोक्तृभावः। रुशब्दने इति धातोः रावः वक्तृवाक्यादिकर्तृक्रियाव्यापारः। चरुः चीर्यते क्रियाकलापः अत्रेति व्युत्पत्त्या

कार्यकर्तृभावापरपर्यायः बाह्याडम्बरक्रियाकलापः तैः। यद्वा, चारस्समयाचारः, रावो वाग्विमर्शः, चरुः प्रथमद्वितीयादितन्त्रागमसम्प्रदायसिद्धपदार्थपञ्चकद्रव्यजातं वा। यद्वा, चारः रामानुजपूर्णप्रज्ञनकुलीशपाशुपतादिसंस्कारदर्शनत्रिकप्रमेयसमयाचार', रावो नाम शैवप्रत्यभिज्ञारसेश्वरादिरासायनिकदर्शनत्रिकप्रमेयं रासायनिकमाभ्यन्तरं कर्म, चरुः काणादाक्षपादजैमिन्यादिदर्शनप्रमेयभूतः कर्तृचैतन्यात्मेति वा। शारीरकस्वरूपानुभववचनकर्मानुष्ठानात्मकव्यावहारिकसच्चिदानन्दत्रिपुटीमयनामरूपाभिन्नब्राह्मणादित्रैवर्णिककुलधर्मा वा चाररावचरुशब्दार्थाः। तैस्तैस्तादृशैश्चाररावचरुभिः। मुद्रया मुदं मानसिकवासनाभूमिकाभेदभिन्नमानन्दविशेषं राति गृह्णातीति मुद्रा तत्तदानन्दानुभवकालिकाऽऽकृतिविशेषः। पाणिनिसांख्यपातञ्जलादिदर्शनत्रिकप्रमेयभोक्तृभावस्फोरकास्फोटापरपर्यायः। बाह्याकृतिमात्रलिङ्गं वा। तयापि विभेदितयेति लिङ्गविपरिणामेनान्वय इति चकारेणावगम्यते। ब्राह्मण्यादित्रैवर्णिकज्ञानक्रियामात्रस्फोरकेण चतुर्थेन देहेन्द्रियसङ्घातमात्रविश्रान्तबाह्यचिह्नेनेति फलितार्थः। एतादृशमुद्रया च तव यदुपासनं तद्वशेन तावन्मात्रायत्ततया 'वश आयत्ततायां च 'वशमिच्छाप्रभुत्वयो' रिति कोशात् तदिच्छया तत्प्रभुत्वेन वा। तावकक्रमगता- तावकः त्वदीयः यः क्रमः सृष्ट्यादिभासान्तकृत्यपञ्चकविस्तृतिरूपः पंचार्थमहाक्रमः, सृष्ट्यादितिरोधानापरपर्यायानाख्यापर्यन्तश्चतुरर्थमहाक्रमः, चिज्जडापरपर्यायविद्याऽविद्यान्यतरसृष्ट्यादिसंहारान्तस्त्र्यर्थमहाक्रमश्च तं गच्छतीति तावकक्रमगता। स्थिरीकृतिः अस्थिरा स्थिरा सम्पद्यमानाकृता कृतिः स्थिरीकृतिः। अचलतया सम्पाद्यमाना, प्राकृतिकप्राणस्पन्दाख्यहृदयोद्योगरूपिणी, निषादपञ्चमपञ्चजनमानवहृदयोद्योगरूपिणी, चातुर्वर्ण्यत्रैवर्णिकादिहृदयोद्योगरूपिणी च कृतिरित्यर्थः। परम्परां परौघप्रभृतिदिव्यौघपर्यन्तामूर्ध्वस्रोतोगुरुसम्प्रदायरूपां भजत इत्यय ऋग्वेदादिसकलस्मार्ततन्त्रागमसम्प्रदायान्तमपराविद्यामातृकायाः चाररावाद्युपासनक्रमपारम्पर्येनिर्णयः। अथातः पराविद्यामातृकायास्तु प्रथममनुत्तरतन्त्रागमसम्प्रदाये नादबिन्दुलिपिभेदेन मातृका तावत्संक्षेपतस्त्रिविधा। तत्रापि

हादिकादिविद्याभेदेन प्रत्येकद्वैविध्ये षड्विधा च। प्राणस्वरवर्णशब्दितया तृतीयविमर्शे वक्ष्यमाणलक्षणया वेदाङ्गशीक्षोक्तया स्वायम्भुवकालरश्मिमध्वृन्दचक्राभिन्नया ब्राह्मीमातृकयासार्कं सप्तविधापि एताएव 'अम्बाद्युले' त्यादिकृत्तिकेष्टकामन्त्रोक्ताः षट्सप्त वा कृत्तिका इति वैदिकीप्रतिपत्तिरपि। तत्राप्यनुत्तराम्नायप्रसिद्धलोपामुद्रादिविद्याकामकलापारंपर्यक्रमेण हादिकादिसाधनाद्यक्षान्तकामकलास्वरूपे च मतभेदेनानन्तप्रकारत्वेपि तत्तदीयानुत्तरोपासनक्रमपारंपर्यं सृष्टिसंहारानाख्याभासक्रमशब्दितं नष्टार्थचतुष्कावभासादिनिर्विकल्पकमेयावभासान्तविपरीतकृत्यपञ्चकशब्दितं वा एकविधमेवेति न तत्र पारंपर्यक्रमभेदः। तथाच श्रुतिरपि 'द्वे विद्ये वेदितव्ये पराचापरा च अपरा ऋग्वेदादिलक्षणा। अथ परा। यया तदक्षरमधिगम्यते" इत्यादिः। तत्रापि संहारक्रमेण शिष्यौघादिगुर्वौघषट्कलक्षणं संक्षेपतो यथा स्वात्मभेदेनेव बहिरिव निस्सरन्ती वैखरी वागर्थमयी गौरवी शिष्यौघमूर्तिः। अपरा विद्यासृष्टिसंहारान्यतरक्रमप्रधाना प्रथमा। तस्याएव स्वरूपारोहे तत्तद्रूपतया धारणायोग एव स्थितिमयी मूर्तिः। सैव 'स्थितिर्नाम स्वरूपस्य तत्तद्रूपतया धृतिः। स्थितिः स्वरूपारोहित्वं प्रतिबिम्बवदेव यत्" इत्यादितन्त्रान्तरवचनैः स्थितितत्त्वविमर्शमयी चेन्मानवौघरूपिणीत्युच्यते! सचे द्विमर्शः पूर्णरूपतया स्वात्मन्युपसंहारक्रमेण चेत्सिद्धस्तदा तत्संहारक्रमप्रधानां नादमातृका तदर्थमातृका वा पश्यन्ती वागर्थषडध्वमयी शाम्भवविसर्गप्रधाना गौरी। सिद्धौघमूर्तिरपि भवितुमर्हति। तदनन्तरदशायामियमेव सादाशिवान्तार्निमेषसम्पत्प्राधान्येन शाम्भवविसर्गमय्यपि नष्टार्थचतुष्कावभासादिनिर्विकल्पकमेयावभासान्तवक्ष्यमाणलक्षणविपरीतकृत्यपञ्चकक्रमेण विद्याऽविद्यान्यतरकृत्यपञ्चकक्रमयोर्यथाधिकारं तिरोधानानुग्रहापरपर्यायानाख्याभासाक्रमप्रणालीव्याजेन दिव्यौघमिथुनमूर्तिमय्यपि च क्रमपर्यावर्तनेन सर्वभूतात्मभूतात्मतापरनामकमहास्थित्या च महापराशिष्यौघत्रिपुटी महामूर्तेरेव विन्दुविमर्शसंज्ञितस्फोटनादवागर्थत्रिपुटीषड्ध्वात्मकस्वात्ममूर्त्या परावैखरीवागर्थविमर्शैकरूप्यं स्वात्मप्रकाशेन सार्कं स्फोटयन्ती नावभासत इति गुर्वौघषडध्वक्रमस्य कालीकाभिन्नपञ्चवाहक्रम-

द्यार्थक्रमस्य वा स्वरूपतत्त्वनिरूपणमिति संक्षेपः । एवं त्रिपुटीषडध्वक्रमस्य त्रिचतुःपञ्चवाहमहार्थक्रमस्य वा त्र्यर्थक्रमान्तर्भावोपि अनुत्तरमहासंवित्स्रोतः स्वच्छन्दचारिभिस्समभ्यूहनीयं इति दिक् । तावकक्रमतया स्फुटाकृतीति पाठे- उपासनमेव कर्तृ । भेदितचाररावचर्वादिभिः यत् तत्र उपासनं पूर्वश्लोकोक्तत्वदीयतुरीयपदसम्बन्धि वर्तते तदेवोपासनम् । वशतया तावकतुरीयपदायत्तत्वेन तदिच्छया तत्प्रमुखत्वेन वा । तावकक्रमतया त्वदीयपञ्चार्थमहाक्रमादित्र्यर्थमहाक्रमपर्यन्तत्वेन सिद्धिमननशेषतापरनामकमध्यौघगुरुक्रमत्वेन वा स्फुटाकृति । तावकक्रमशब्दार्थरूपतया आऽऽविपालगोपालं चर्मचक्षुर्वेद्यदेहेन्द्रियादिक्रमगतजातिव्यक्तिगुणक्रियादिक्रमरूपेण वा स्फुटाकारं यथा तथा । परं कालपरशिवरूपम् । परां परावागर्थरूपिणीं त्वां च भजते स्वस्वकुलधर्मानुपालनद्वारेण सेवतएव । उक्तं च गीतासु भगवतापि- 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । नतु मामभिजानन्ति तत्त्वेना-तश्च्यवन्ति ते' इति ॥७१-७२॥

एवमुक्तत्रिचतुःपञ्चार्थमहानादमयगुरुसम्प्रदायमहाक्रमेषु चतुरर्थगुरुक्रमे पूर्वं पुष्पसङ्कोचक्रमोक्तद्वादशे नष्टसन्ततित्वदोषनिवृत्तिद्वारेण वक्ष्यमाणस्पर्शस्फोटपर्यन्तवागर्थमूर्तितो नीतसन्ततित्वलाभाय च मध्यममानन्यायेन वागर्थनादत्रिपुटीमयीमर्थप्रकृतिं वैदिकत्रिवर्गात्मना परमप्रमेयभूतां 'विमर्शो बिन्दुनादौ च स्फोटश्शब्दश्च वाक्क्रमः" इत्युक्तपञ्चवाहमयीं परमप्रमातृभूतां शाब्दीं प्रकृतिं च- "चत्वारि वाक्परिमिता पदानि । तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति । तुरीयं वाचो मनुष्या वदन्ति" इति श्रुत्युक्तवैदिकक्रत्वर्थवागर्थमूर्तौ पद्मिन्यादिहस्तिनीपर्यन्तकामशास्त्रोक्ततांत्रिकत्रैवर्गिकपुरुषार्थमूर्तौ च प्रमाणपदमूल्याष्टकरूपायां मूर्तप्रकृतौ च वैदिकतान्त्रिकज्ञानक्रियादूतीयागयोगसामरस्यमुखेन धामसंविद्वर्णक्रमैर्वक्ष्यमाणप्रकाशानन्दमूर्तिमयबृन्दचक्रात्मना नादबिन्दुलिपिमूर्तिकला चातुर्विध्येन चेज्यायोग्यतां वर्णयन् विमर्शमुपसंहरति—

मङ्गले त्वमसि वाक्चतुष्टये
या परा स्फुरति मूर्तिमण्ड (पे (ले) ।
सा प्रकाश (सु [मु) खवृन्दचक्र (भा (गा)
नादबिन्दुलिपिमूर्तिरि (ज्य (ष्य) से ॥७४॥

इति श्रीमहाकवि- कालिदासकृतौ चिद्गगनचन्द्रिकायां
द्वितीयो विमर्शस्समाप्तः ॥

मङ्गले इत्यादिना । मङ्गले इति देहलीदीपन्यायेन सम्बुद्धिसप्तम्युभयविभक्तिविवक्षया वाग्देवतामूर्तिमण्डपयोर्विशेषणतया योज्यम् । हे मङ्गले विमर्शशरीरेण सर्वमङ्गलात्मिके महाकालि । मङ्गलात्मके वाक्चतुष्टये परापश्यंत्याद्यात्मके। तथैव मूर्तिमण्डपे च। त्वं विमर्शमयी असि । एकत्र शब्दरूपेण, अन्यत्रार्थरूपेण, उभयत्र सामरस्यविमर्शात्मना च त्वं मङ्गलेवासीत्यर्थः। मूर्तिमण्डले इति पाठे" मण्डलात्मना स्थितमूर्तिसमूहे इत्यर्थः। वाक्चतुष्टये परापश्यन्त्यादिरूपे मूर्तिमण्डले, पद्मिनीचित्रिण्यादिरूपे च । या परा परानाम्नी वाक् पद्मिनीजातीया मूर्तिश्च । यद्वा वैखरीनाम्नी वाक् हस्तिनीजातीया मूर्तिश्चेति वा कामशास्त्रोक्तस्वीयापरकीयासामान्यादिनायिकाभेदेषु परकीया च ध्वन्यते । स्फुरति त्रेधा भेदस्फुरणेनापि विमर्शवेलायां स्वाभेदेन प्रकाशते । तथाहि वैखर्यपि स्वीया, वर्गाष्टकजननीत्वेन परश्रोत्रेन्द्रियग्राह्यतया परा सर्वोत्कृष्टा स्फुरति । परकीयापि वैखरी, वाक् स्वश्रोत्रेन्द्रियग्राह्यतया स्वविषयतया च परा सर्वोत्कृष्टा स्फुरति । मूर्तिमंडलपक्षेपि- परापद्मिनी श्रेष्ठा स्फुरति । हस्तिनी च मूर्ति रस्वजातिपुरुषोपयोगितया परा श्रेष्ठा स्फुरति । परकीयापि "छन्दसि व्यवायेपि" इति पाणिनीयवैदिकशाब्दनियमस्य वैदिकनियोगादौ उभयसम्मतौ मन्त्रादिभिर्वंशतंत्वादिमहार्थहेतुतया अर्थातिदेशेनाप्यङ्गीकृत्य परस्त्रियो नियोगविषयताप्रदर्शनात्परकीयापि मूर्तिः वंशतन्तुप्रतिष्ठाहेतुतया सर्वोत्कृष्टा स्फुरति । सा परा पद्मिनीव । "अष्टाचक्रा नवद्वारा" इत्यादिश्रुत्युक्तपद्मानि अस्यास्सन्तीति व्युत्पत्त्या पद्मिन्येव । एवं वैखर्यपि । सा परा वैखरी वा वाक्। प्रकाशसुखवृन्द-

चक्रभा प्रकाशचक्रं मुखे आरम्भे यस्य प्रकाशानन्दमूर्तिमयबृन्दचक्रस्य तत् प्रकाशमुखबृन्दचक्रं प्रकाशमुखबृन्दचक्रस्य भेत्र भा यस्याः परावाचः वैखरीवाचो वा सा प्रकाशमुखबृन्दचक्रभा । प्रकाशसुखबृन्दचक्रगेति पाठे- प्रकाशरूपं यत् सुखबृन्दचक्रं चक्राकारसम्भावितविषयानन्दसमूह इत्यर्थः । महार्थमञ्जरीपरिमलविवृतपञ्चविधरश्मिस्कन्धात्मकं बृन्दचक्रं वा तद्गच्छतीति प्रकाशसुखबृन्दचक्रगा । पञ्चस्कन्धात्मकबृन्दचक्रस्वरूपविस्तरस्तु ज्ञानमन्त्रयोगशाक्तशाम्भवाख्यवक्ष्यमाणलक्षणपञ्चस्कन्धरश्मिमयः चतुष्षष्टिसङ्ख्याकमातृकार्णबृन्दमयः अग्रे वितन्यते मूर्तिपक्षेपि सा पद्मिन्यादिजातीया स्त्रीमूर्तिः । प्रकाशमुखं (सुखं) वा बृन्दयति एकत्र केंद्रीकरोति प्रकाशमुख- (सुख) बृन्दः । स्वयंप्रकाशात्मानन्दसुखस्य विषयानन्दसुखस्य वा उपदेष्टा दाता वा गुरुः भर्त्रादिरूपः । सोपि प्रकाशमुख (सुख) बृन्द एव । तच्चक्रं जीवचक्रापरनामकं ज्ञानक्रियादूतीयागपीठरूपं तृतीयविमर्शे वक्ष्यमाणम् । तस्य भा कांतिरूपिणी वा तं गच्छति प्राप्नोति वा । प्रकाशमुख(सुख) बृन्दचक्र (भा (गा) वा । नादबिन्दुलिपिमूर्तिः नादः नदतीति नाद इति व्युत्पत्त्या "विमर्शो बिन्दुनादौ च स्फोटश्शब्दश्च वाक्क्रमः" इत्युक्तबहिर्मुखप्रमातृनादस्थानीयाऽव्यक्तबिन्दुरूपः विमर्शापरनामकः बिन्दुः प्रमाणपदं गतविवक्षापरनामकः पश्यन्तीमध्यमान्यतरव्यक्ताव्यक्तध्वनिरूपः । लिपिः प्रमेयविषयाकाराकारितकलात्मिकास्फोटरूपा । तत्त्रितयसमष्टिः चतुर्थमूर्तिरूपा । इज्यसे । साधकैरिति शेषः । इष्यसे इति पाठे- यजिधातु- संप्रसारणेन 'इष इच्छाया' मिति वा धातोः क्रमेण यागार्थकत्वादिष्टिशब्दार्थ- विषयीक्रियसे इत्यर्थः । इच्छाविषयीक्रियने इज्याविषयीक्रियसे चेति लभ्यते । एतदेव वेदानां देवानां च सृष्ट्यादिकृत्यपञ्चकक्रमेण गुप्तिभाषितजगद्विजृम्भणमर्यादया च परोक्षप्रियता प्रत्यक्षद्वेषिता चेति भावः । तथा च तैत्तिरीयब्राह्मणे तृतीयकाण्डे द्वादशप्रपाठकद्वितीयानुवाकादिग्रन्थसन्दर्भेण स्वर्गद्वारेष्टिप्रकरणे "देवेभ्यो वै स्वर्गो लोकस्तिरो भवत् । ते प्रजापतिमब्रुवन् । प्रजापते स्वर्गो वै नो लोकस्तिरोभूत् । तमन्विच्छेति । तं यज्ञक्रतुभिरन्वैच्छत् ।

सं यज्ञक्रतुभिर्नान्वविन्दत् । तमिष्टिभिरन्वैच्छत् । तमिष्टिभिरन्वविन्दत् । तदिष्टीनामिष्टित्वम् । एष्टयो ह वै नाम । ता इष्टय इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः । तमाशान्नवीत्'' इत्यादिना स्फुटीकृतम् । एतेन 'एषसत्यान्वेषणे' इत्यादिधातुप्रातिपदिकभेदबलेन त्वदीयसत्यस्वरूपावबोधार्थमन्विष्यसे चेत्यर्थोऽपि लभ्यतएव । अतएव उक्तं च कामकलाविलासे-शिवशक्तिमयसितशोणबिंदुयुगलस्य शाक्तविसर्गभावेनैव कामकलात्मना नादमयवागर्थसृष्टिहेतुत्वम्— "सितशोणबिंदुयुगलं विविक्तशिवशक्तिसंकुचत्प्रसरम् । वागर्थसृष्टिहेतुः परस्परानुप्रविष्टविस्पष्टम् । स्फुटितादरुणाद्बिन्दोर्नादब्रह्मांकुरो रवोऽव्यक्तः । कामः कमनीयतया कला च दहनेंदुविग्रहौ बिन्दू'' इत्यादिना वागर्थसृष्टिहेतुत्वमविभिन्नप्रकाशविमर्शात्मिकाया मङ्गलादेव्याः स्फुटमुपवर्णितम् । दूतीयागयोगक्रमोऽपि ज्ञानार्णवे द्वाविंशतिपटले क्रियादूतीक्रममुपवर्ण्य, त्रयोविंशतिपटले ज्ञानदूतीक्रमप्रकारोऽपि दर्शितो यथा "दूत्यन्तरं प्रवक्ष्यामि येन ब्रह्म सनातनम् । प्रणश्यत्वं यागगेहं प्रविश्य सुरवंदिते'' इत्यारभ्य, "जातिभेदस्तु दूतीनां चतुर्धा परिकीर्तितः । हस्तिनी शङ्खिनी चैव चित्रिणी पद्मिनी प्रिये । चतुर्विधाहि दूत्यस्तु सुंदर्यश्चारुलोचनाः । वैखरी हस्तिनी ज्ञेया स्थूला यस्माद्वरानने । ययेदं धार्यते सर्वं ब्रह्माण्डपरिपिण्डलम् । वर्गाष्टके च देवेशि सूते दिग्गजसञ्चयम् । तेनेयं करिणी प्रोक्ता मध्यमा शङ्खिनी भवेत् । शङ्खिनी तु यथा भद्रे विशुद्धा पापवर्जिता । सर्वदेवप्रिया सा हि शांतिसौभाग्यशोभिता । तथा वनस्पतिगता मध्यमा वाग्वरानने । चित्रिणी वल्लरी देवी महदोषविनाशिनी । यस्याः फलं वरारोहे शिवशक्तिमयं सदा । शिवशक्तिमयं देवि प्राणिमात्रं जगत्रयं । तेषु सर्वेषु पश्यन्ती जीवेषु परमाश्रया । परब्रह्मणि संलीना परा वाक्परमेश्वरी । तां दूतीं तत्र संपूज्य समाधिकुसुमैः शुचिः । पद्मिनी तु पराज्ञेया हंसस्वच्छंदचारिणी । हंसोऽद्वयेन पद्मं हि त्यक्त्वा संकोच मद्रिजे । विकासयति सौभाग्यं तथा वस्तुप्रकाशतः । परा प्रकाशमायाति पद्मिनीत्वमतो भवेत् । तस्या देहे वरारोहे कलाः पूज्यास्तु षोडश'' इत्यादिना परा-

दिपरिमितवाक्पदानां पद्मिन्यादिनायिकामूर्तिभेदानां चाभेदेनाद्वैतस्वरूपसा- मरस्यसमाधिस्तत्रैव द्रष्टव्य इति दिक् ॥७२-७४॥

यद्यपि कलिकातानगरागमानुसन्धनसमितीये मूलचिद्गगनचन्द्रिकाकोशे श्लोकोयं नोपलभ्यते । तथाप्यन्यत्रोपलब्ध इत्यत्र प्रक्षिप्य व्याख्यायते ।

आदिमांतिमगृहीतवर्णरा
शयात्मिकाहमिति या स्वतःप्रथा
मन्त्रवीर्यमिति साधितागमै
स्तन्मयो गुरुरसि त्वमम्बिके ॥इति॥ ७५॥

अस्येयमवतरणिका एवं ज्ञानक्रियादूतीयागसामरस्यं सप्रमाणं निरूप्य वक्ष्यमाणब्राह्मीनारायणीमाहेश्वर्याद्यक्षरसमाम्नायव्यवहृतवाक्षमातृकासाधारण्येन द्वयोरहमो रमाकलायाश्च पूर्वोक्तत्रिपुटीषडध्वसप्तस्रोतादिवर्गवर्णस्वरूपक्रमप्रथायां तत्तत्प्रत्याहारक्रमसिद्धगौरीमूर्तिमयं मन्त्रवीर्यशब्दितं कौशिवशाक्तस्यभेदमपि संसाधयति—आदिमान्तिमेत्यादिना- हे अम्बिके! आदिः (अनुत्तराकारादिः) मान्तिमः । शांभवविसर्गकार्यमकारावसानकश्च । अत एव गृहीतः । गृहाकारेण प्राप्तः । गृहवागर्थरूपोपाधितादात्म्येनाप्तः । आदावमाकलात्मनोपलब्ध इत्यर्थः । तथा आदिमः । अनुत्तराकारस्वरवर्गवर्णान्यतमरूपः । अन्तिमः शाक्तविसर्गबिन्दुद्वयात्मकः । तत्कार्यभूतः । "शषसर्" सूत्रीयवर्गवर्णान्यतररूपो वा । शांभवविसर्गोपहितस्तत्कार्यहलन्त्यसूत्रीयहकारवर्णात्मको वा । पश्चादसावहमाकलात्मना वा उपलब्धश्चेत्यर्थः । ताभ्यां ताभ्यां च क्रमेण गृहीकृतस्सञ्जातग्रहश्च कृतो यो वर्णराशिः । अकारादिमकारान्तः । तदाद्यनुत्तरविसर्गान्तस्तत्कार्योतश्चान्योन्यगर्भिगर्भभावप्रत्याहारभेदैरुपलब्धः स्वरव्यंजको नादव्यंजको वा वर्णराशिरिति भावः । तदात्मिका । या अहमिति स्वतःप्रथा । अमाकलात्मकः स्वपारमार्थिकनामरूपाहमात्मकश्च पृथूभाव इत्यर्थः । सैवेति विधेयप्राधान्यविवक्षया स्त्रीत्वं । आगमैः शास्त्रैः । मन्त्रवीर्यमिति स्वरूपमिति च । साधिता । "स्तोष्ठातावात्मनि स्वं च स्त्रियामात्मीये" इति

कोशात् उपाध्युपहितलिङ्गत्रयगूढाभिसन्धिदृग्भेदेन संजातसाधना सिद्धसा- धना च कृतेति! सैवत्वं। गुरु गौरीमूर्तिः। तन्मयो गुरुरपि। त्वमेवासि। अमाकलादौ कालदृगिव प्रातिपदिकेन त्वदीयदृग्भेदेनैव स्वरूपेपि यागयोगादि दृग्भेदकल्पना। स्वरूपदशा तु न किमपीति भावः ॥९३-७९॥

द्वितीये व्यवहारैकप्रमातृयुगलस्पृशि। विमर्शे चिच्चन्द्रिकास्यभाष्या दीव्या चकोरिका ॥१॥ धनदानंदनाथेन कृता सर्वार्थसिद्धिदा। विचेयमत्र सततं मातृमानयुगं बुधैः ॥२॥ ये शक्तिभावमणुतां समवापुरुच्चैस्ते गौरवीं समुपसद्य सम (र्च्य) र्घ्य) मूर्तिं। प्रौढान्तरुल्लसनदिव्यदशावलोकमुद्घाट- यन्तु यदिमां सुदिदृक्षवः स्युः ॥३॥ धनदानन्दनाथीयं बहुधा(ऽ)न्यविवर्जितं स्वात्मीयमेव सततं सर्वे समुप (युं) भुं) जते ॥४॥ यथा गुरुः प्रसादः स्या- ल्लघुशब्देन्दुशेखरे। तथेयं कलिदासानां व्याख्या दीव्या चकोरिका ॥५॥ विद्वत्प्रवृत्त्यभिमुखीकरणा (र्थमयाच) दपरा (र्ध्य) ध्य) तः। वचां स्युच्चाव- चानीति (मृ) तु) ष्यंत्वत्र विमर्शकाः ॥६॥ "आगमाश्च विकाराश्च प्रत्यया- स्सहधातुभिः। उच्चार्यंते ततस्तेषु नेमे प्राप्ताः कलादयः ॥७॥ एवं महा- भाष्यकारवचोप्यत्र निदर्शनं। कलनारहितस्वागमादीनां पाठकर्मणि॥

इति श्रीधनदानन्दनाथकृतौ चिद्गगनचान्द्रिकाव्याख्यायां दिव्यचकोरिकाख्यायां द्वितीयो विमर्शः समाप्तः।

श्रीसद्गुरुकामाक्ष्यम्बानन्दनाथचरणसरोजयोः उपायनीकृतश्चेति शिवम्।

